॥ श्रीः ॥

श्रीभर्तृहरिकृतं

# नीति-शृङ्गार-वैराग्य-

## शतकत्रयम्।

प्राचीनसंस्कृतटीकासमेतम्।

महामहोपाध्यायपण्डितामिहिरचन्द्रकृतभाषाटीकया
च प्रपूर्य समलंकृतम्।

तदेतत्

खेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये

मुद्रयित्वा प्रकाशितम्।

शके १८२९, संवत् १९६४.

॥ ऋद्धिसिद्धीश्वराय नमः ॥



# अथ भर्तृहरिकृतं शतकत्रयम् ।

## तत्र नीतिशतकं प्रारभ्यते ।



**दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्त्तये ॥**
**स्वानुभूत्येकसाराय नमः शान्ताय तेजसे ॥ १ ॥**

( संस्कृतटीका ) विघ्नेशं विघ्नहर्तारं गणराजं नमाम्यहम् ॥ शारदां वरदां नौमि तथा जाड्यापनुत्तये ॥१॥ श्रीगोपालं नमस्कृत्य नत्वा गुरुपरंपराम् ॥ भर्तृहरिकृतो ग्रन्थस्तस्य व्याख्यां करोम्यहम ॥ २ ॥ दिगिति । दशदिशासु यथा भूतभविष्यद्वर्तमानत्रिकालेषु च अनवच्छिन्नः अत एव अनन्तः अन्तो नास्ति चिन्मात्रमेव ज्ञानं मूर्तिः स्वरूपं यस्य तथा स्वानुभूतिः स्वस्यानुभवः स एव सारांशो यस्य एतादृशं शान्तं यत्तेजो ब्रह्मरूपं तस्मै नमः ॥ ग्रन्थादौ ग्रन्थमध्ये ग्रंथान्ते च मंगलमाचरणीयमिति शिष्टाचारोऽस्ति अतो ग्रंथकर्त्रा नमनात्मकं मंगलं कृतम ॥ १ ॥

( भाषाटीका ) दशों दिशा और त्रिकालआदिमें परिपूर्ण अनंत चैतन्यमूर्ति केवल अपनेही अनुभवज्ञानसे जानने योग्य शांत और तेजोरूप ईश्वरको नमस्कार है ॥ १ ॥

**यां चिन्तयामि सततं मयि सा विरक्ता**
**साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ॥**

**अस्मत्कृते च परितुष्यति काचिदन्या**
**धिक्तां च तं च मदनं च इमां च मां च ॥ २ ॥**

( सं० टी० ) प्रयोजनमनुद्दिश्य न मंदोपि प्रवर्तते । एवं नीतिर्वर्तते तर्हि केन कारणेन ग्रंथः कृतस्तत्कारणं येन वैराग्योत्पत्तिस्तल्लिखति यामिति । धिग्योगे द्वितीया भवति अतो द्वितीया विभक्तिरुक्ता । राज्ञा विक्रमशकेन स्वलब्धं फलं कस्मैचिद्ब्राह्मणाय दत्तं तस्य फलस्य महिमा येन भक्षितं सोऽमरो भवति मरणं नास्ति तत्फलं ब्राह्मणेन मनसि विचार्य बहूनां पालको राजा भर्तृहरिस्तस्मै दत्तं तेन भर्तृहरिणा स्वपत्नी प्रियतमा तस्यै दत्तं तया हि कश्चन जारस्तस्मै दत्तं जारेणापि स्वस्य प्रिया काचन पुंश्चली तस्यै दत्तं तत्फलम् एकस्मिन्दिने पुंश्चलीसमीपे राज्ञा दृष्टम । पश्चाच्छोधः कृतः तावत्पूर्वापरं ज्ञात्वा पश्चाद्वैराग्येण निंदति । अहं यां स्वस्त्रियं चिंतयामि प्राणादधिकां मन्ये सा स्त्री मयि विरक्ता अन्यं जारं प्रियमिच्छति सोऽपि अन्यां पुंश्चलीं प्रियत्वेनेच्छति एवं मदर्थेऽपि काचन स्त्री मया सह संगो भवितव्य इति मनसि संतोषं प्राप्नोति एवं न कश्चित्कस्यचित्प्रियः अतो निंदति सा पुंश्चली तां च धिक् स जारः तं च धिक् इयं मदीया स्त्री इमां च धिक् अहमपि एतादृशो मूर्ख मां च धिक् इदं सर्वं मदनकृतं जातमतो मदनं च धिक् ॥ २ ॥

( भा० टी० ) जिसकी मैं निरन्तर चिन्ता करता हूँ सो मुझसे विरक्त होकर दूसरे जनकी इच्छा करती है और वह जन अन्य स्त्रीपर आसक्त है और वह अन्य स्त्री हमसे प्रसन्न है इसलिये मेरी प्रिया ( जो दूसरे जनको चाहती है ) को और दूसरे जन ( जो अन्यस्त्रीको चाहता है ) को और इस अन्य स्त्री ( जो फिर मुझसे प्रसन्न है ) को और मुझे ( जो इससे फँसाहूँ ) और कामदेवकोभी धिक्कार है कि, जिसकी यह प्रेरणा है ॥ २ ॥

**अज्ञः सुखमाराध्यः सुखतरमाराध्यतेविशेषज्ञः ॥**
**ज्ञानलवदुर्विदग्धं ब्रह्मापि च तं नरं न रंजयति ॥ ३ ॥**

( सं०टी० ) एवं ज्ञाते सति स्वस्मिन् मूर्खत्वं ज्ञातमतो मूर्खलक्षणानि वदति । अज्ञ इति । यः केवलं न जानाति सोऽज्ञः मूर्खः स तु शिष्टेन युक्तायुक्तमुक्तं तच्छृणोति तथैव

करोति अतः सुखेन आराधितुं वशीकर्तुं शक्यः यस्तु विशेषं युक्तायुक्तं जानाति स विशेषज्ञः कदाचित्प्रमादादयुक्ते कर्मणि प्रवृत्तः सन् अपरेण निवारितश्चेच्छृणोति स च अत्यंतवशीकर्तुं शक्यः । अधुना उभयोर्विलक्षणः अज्ञो न भवति पूर्णज्ञातापि न भवति शास्त्रे प्रवेशो नास्ति बहुश्रुततया स्वस्मिन्पण्डितंमन्यतया परस्य वचनं न शृणोति किंचिज्ज्ञानलवेन दुर्विदग्धो गार्विष्ठस्तं वशीकर्तुं ब्रह्मापि न शक्तः इतरेषां का वार्ता॥ ३॥

( भा० टी० ) अज्ञानी सुखसे साधा जासकता है और ज्ञानी अतिसुखसे परंतु अल्पज्ञ नरको ब्रह्माभी नहीं साध सकता है ॥ ३ ॥

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रांकुरा-
त्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् ॥
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४ ॥

( सं० टी० ) प्रसह्येति । अधुना मूर्खः सन्प्रतिनिविष्टचित्तस्तस्य चित्तमाराधितुं न शक्यम् । आराधनाभावं दृष्टांतेन वदति । मकरो नाम झषविशेषस्तस्य वक्त्रे दंष्ट्रांकुरस्तस्मिन्मणिः स मणिः प्रसह्य बलात्कारेण निष्कासितुं शक्यो भवेत् मकरवक्त्रे मणेरभाव एव सोऽपि कालेन भावो भविष्यति । तथा च प्रचलंतीनामूर्मीणां लहरीणां मालाः समुदायास्ताभिराकुलं समुद्रमपि बाहुभ्यां संतरेत्।तथा च कोपितं भुजंगं शिरसि पुष्पवद्धारयेत् एते अघटिता दृष्टांताः कालेन भविष्यंति परं तु प्रतिनिविष्ट आविष्टचित्तः सन् यत्किंचित् मनसि धृतं न त्यजति कस्यापि वचनं न शृणोति तस्य मूर्खस्य चित्तमाराधितुं न शक्यं ज्ञातापि आविष्टचित्तः सन् यत्किंचित्करोति स्वहितं न जानाति सोपि मूर्खान्तःपात्येव यथा रावणदुर्योधनादयः ॥ ४ ॥

( भा० टी० ) बलात्कारसे मगरके मुखके दाढोंकी नोक जडमेंसे मणिको मनुष्य निकाल सकता है और चंचलतरंगोंवाले भरेहुए समुद्रको तैरके पार होसकता है और क्रोधित सर्पको फूलकी समान मनुष्य शिरपर धर सकता है परंतु मूर्खका चित्त जो असत् वस्तुमें धसाहुआ है उसे कोई नहीं विलगा सकता है ॥ ४ ॥

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ॥
कदाचिदपि पर्यटञ्छशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

( सं० टी० ) लभेतेति । सिकतासु वालुकासु तैलं यत्नतः प्रयासेन पीडयन्सन् कदाचिल्लभेत तथा च तृषार्तः सन्मृगतृष्णिकासु सलिलं कदाचित्पिबेत् कदाचित् पृथ्वीं पर्यटन् सन् शशस्य विषाणं शृङ्गं प्राप्नुयात् एवमघटितघटनं भविष्यति, परं तु प्रतिनिविष्टमूर्खजनस्य चित्तं न आराधयेत् ॥ ५ ॥

( भा० टी० ) यदि यत्नसे पेरै तो वालूमेंभी तेल पावे और मृगतृष्णामें प्यासा कदाचित् जलभी पीवे और ढूँढनेसे शशका सींगभी मिलसके परंतु मूर्खका चित्त जो असत्वस्तुमें धसा है उसे कोई नहीं भिन्नकर संभाल सकता है ॥ ५ ॥

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
छेत्तुं वज्रमणीञ्छिरीषकुसुमप्रान्तेन सन्नह्यते ॥
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यंदिभिः ॥६॥

( सं० टी० ) व्यालमिति । व्यालं गजं बालमृणालतंतुभिः कोमलकमलतंतुभी रोद्धुमवरोद्धुं यथा वाञ्छति । तथा च वज्रमणीन् शिरीषपुष्पाग्रेण सच्छिद्रान् कर्तुं सन्नद्धो भवति । तथा च क्षारसमुद्रस्य मधुबिंदुना माधुर्यं कर्तुमीहते चेष्टते । एवं यथा अघटितानि कर्तुमिच्छति तथा खलान् सतां मार्गे नेतुममृततुल्यैः सूक्तैर्वाग्भिर्वाञ्छति । परं तु दुष्टान्सन्मार्गे प्रवर्तयितुं न शक्नोतीत्यर्थः ॥ ६ ॥

( भा० टी० ) वह मनुष्य कोमलकमलकी दंडीके सूतसे हाथीको बांधा चाहता है और शिरसके फूलकी पाँखुरीसे हीरेको वेधा चाहता है

और खारे समुद्रको एकबूँद मधुररससे मीठा किया चाहता है जो खलोंको अपने अमृतसमान उपदेशसे सन्मार्गमें लानेकी इच्छा करता है ॥ ६ ॥

**स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ॥**
**विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ७॥**

( सं० टी० ) स्वायत्तमिति । अपण्डितानां मूर्खाणामज्ञताया मौर्ख्यस्य छादनमाच्छादनं मौनं विधात्रा ब्रह्मणा विनिर्मितं कथंभूतं मौनं स्वायत्तं स्वाधीनं पुनः कथंभूतम् एकांतगुणं रहस्यं तदेव मौनं सर्वविदां सर्वज्ञानिनां समाजे सभायां भूषणं विशेषतो भवति ॥ ७ ॥

( भा० टी० ) मौन अर्थात् चुप रहना एक तो अपने अधीन है और भी इसमें अनेक गुण हैं विधाताने इसको अज्ञानताका ढकना बनाया है और विशेषकरके सर्वज्ञोंकी सभामें मूर्खोंका मौनही भूषण है ॥ ७ ॥

**यदाकिञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ॥**
**यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥८॥**

( सं० टी० ) यदेति । यदा यस्मिन् कालेकिंचिज्ज्ञोऽहमपि न किंचिज्जानामीति द्विप इव करीव मदांधः समभवं जातोऽस्मि तदा तस्मिन्काले अहं सर्वज्ञ इति मम मनोऽवलिप्तं गर्वितमभवत् तदुपरि यदा बुधजनस्य पंडितजनस्य सकाशादवगतं पंडितेभ्यः किंचित् किंचिज्ज्ञातं तदा अहं मूर्खोस्मीति ज्ञातं पूर्वं यो मम मदोऽभवत्सोऽपि ज्वर इव व्यपगतः ॥ ८ ॥

( भा० टी० ) जब मैं अज्ञ रहा हाथीके समान मदांध था तब मेरे मनमें ऐसा गर्व हुआ कि, मैं सर्वज्ञ हूं और जब मुझे कुछ कुछ पण्डितोंसे ज्ञान प्राप्त हुआ तब मैंने अपनेको मूर्ख जाना और मेरा वह मद ज्वरके समान उतर गया ॥ ८ ॥

कृमिकुलचितं लालाक्लिन्नं विगर्हि जुगुप्सितं
निरुपमरसं प्रीत्या खादन्नरास्थि निरामिषम् ॥
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥९॥

( सं० टी० ) कृमीति । क्षुद्रो जनः पार्श्वस्थमपि सुरपतिं विलोक्य हि निश्चयेन न शङ्कते न गणयति निंद्यकर्म करोत्येव । यथा श्वा नरस्य अस्थि कृमिकुलैर्युक्तं लालया लुलितं विगर्हितमपवित्रं जुगुप्सितं निंद्यं निरुपमरसं निरामिषं मांसरहितम् एतादृशमपि प्रीत्या खादन्न लज्जते तद्वत् क्षुद्रो नीचो जंतुः परिग्रहस्य फल्गुतां निःसारतां न गणयति न लज्जते ॥ ९ ॥

( भा० टी० ) कीडोंके समूहसे भरा, लारसे भीगा, दुर्गंधसे भरा हुआ निंदित नीरस और निर्मांस, मनुष्यके हाडको निर्लज्ज श्वान प्रीतिपूर्वक खातेसमय इंद्रकोभी अपने पास खडे हुए देखकर शंका नहीं करता है इससे यह सिद्ध हुआ कि, क्षुद्रजीव जिस वस्तुको ग्रहण करता है उसकी स्वच्छतापर ध्यान नहीं करता ॥ ९ ॥

शिरः शार्वं स्वर्गात्पतति शिरसस्तत्क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ॥
अधो गङ्गा सेयं पदमुपगता स्तोकमथ वा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥

( सं० टी० ) शिर इति । विष्णुपादोदकमादौ शार्वं शर्वो महादेवस्तस्येदं शार्वं शिरस्तत्प्रति स्वर्गात्पतति शिरसो महीध्रं पर्वतं महीध्रादुत्तुङ्गात् पर्वतमस्तकादवनिं पृथ्वीम् अवनेश्चापि जलनिधिं समुद्रम् एवं जलमधोधः पदं स्थानं प्राप्तं सा इयं गंगा स्तोकं क्षुद्रं पदं शतमुखैः सागरं प्राप्ता एवं विवेकभ्रष्टानाम् अविवेकिनां शतमुखमधःपतनं गंगाजलवद्भवतीत्यर्थः ॥ १० ॥

( भा० टी० ) यह गंगा पहिले स्वर्गसे शिवजीके मस्तकपर गिरी फिर वहाँसे ऊंचे पर्वतपर औरपर्वतसे पृथ्वीपर पृथ्वीसे समुद्रमें इस क्रमसे नीचे

नीचेही गिरती गई और स्वल्प भी होती गई तैसेही विवेकभ्रष्ट लोग भी सर्वदा सौ सौ प्रकारसे गिरतेही जाते हैं ॥ १० ॥

**शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो**
**नागेन्द्रो निशितांकुशेन समदो दण्डेन गोगर्दभौ ॥**
**व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं**
**सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥११॥**

( सं० टी० ) शक्य इति । जलेन हुतभुगग्निर्वारयितुं शक्यः । छत्रेण सूर्यातप उष्णं वारयितुं शक्यः । नागेंद्रो हस्ती समदः निशितेन तीक्ष्णेनांकुशेन वारयितुं शक्यः । दण्डेन गौर्वृषभो गर्दभश्च। भेषजेनौषधविधिना नियमेन व्याधिर्वा। मन्त्रप्रयोगैर्विषं वा एवं सर्वस्य शास्त्रविहितमौषधं निरसनप्रकारोऽस्ति परं तु मूर्खत्वनिरसनरूपं कुत्राप्यौषधं नास्तीति ॥ ११ ॥

( भा० टी० ) जलसे अग्निका, छातेसे धूपका, पैने अंकुशसे उन्मत्त हाथीका, दंडसे दुष्ट बैल और गदहेका, नानाप्रकारकी औषधियोंसे व्याधिका, और मंत्रप्रयोगसे विषका निवारण होसकता है ऐसे शास्त्रकी विधिसे सबकी औषधी है परंतु मूर्खकी औषधी नहीं होसकती ॥ ११ ॥

**साहित्यसंगीतकलानभिज्ञः साक्षात्पशुः पुच्छविषाणहीनः ॥**
**तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ॥१२॥**

( सं०टी० ) साहित्येति । साहित्यस्य संगीतस्य कलानां च अनभिज्ञः ज्ञानं नास्ति एवंभूतो यो नरः स पुच्छविषाणरहितः साक्षात्पशुरेव तर्हि यदा पशुस्तदा तेन तृणं भक्षणीयं तत्तु न खादति जीवत्यपि इदं तु इतरपशूनां परममुत्कृष्टं भागधेयमदृष्टम्॥ १२॥

( भा० टी० ) साहित्य और संगीतशास्त्रकी कलासे जो मनुष्य हीन है वह पूंछ और सींगरहित साक्षात् पशु है तृण नहीं खाता और जीता है यह उन पशुओंका परमउत्तम भाग है ॥ १२ ॥

**येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः॥**
**ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥१३॥**

( सं० टी० ) येषामिति । येषां न विद्या न तपो न दानं न शीलं न सद्वृत्तं तदपि च न गुणः सत्त्वगुणो न धर्मो न एवं भूता ये मनुष्यास्तेऽस्मिन्मर्त्यलोके भुवि भारभूताः संतो मनुष्यरूपेण मृगा एव विचरंति ॥ १३ ॥

( भा० टी० ) जिनको विद्या, तप, दान, ज्ञान, शील, गुण और धर्म नहीं वे मृत्युलोकमें पृथ्वीपर भाररूप साक्षात् पशु हैं और मनुष्यके स्वरूपसे विचरते हैं ॥ १३ ॥

**वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ॥**
**न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि ॥ १४ ॥**

( सं० टी० ) वरमिति । पर्वतदुर्गेषु वनचरैर्व्याघ्रादिभिः सह भ्रमणं वरमुत्कृष्टं परं तु मूर्खजनसंबंध इंद्रभवनेष्वपि मास्त्विति ॥ १४ ॥

( भा० टी० ) पर्वत और वनमें वनचरोंके संग भ्रमण करना अच्छा परंतु मूर्खजनका संसर्ग इंद्रभवनमें भी बुरा है ॥ १४ ॥

इत्यज्ञनिंदाप्रकरणम् ।

**शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा**
**विख्याताः कवयो वसंति विषये यस्य प्रभोर्निर्धनाः॥**
**तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः**
**कुत्स्याः स्युः कुपरीक्षका हि मणयो यैरर्घतः पातिताः१५**

( सं० टी० ) अथ विद्वत्प्रशंसा ॥ शास्त्रेति । व्याकरणाभिधानादिभिः शास्त्रै-रुपस्कृताः शिक्षिताः शब्दास्तैः सुंदरा गीर्वाणी येषां ते तथा च शिष्येभ्यः प्रदेया दत्ताः पाठिताः आगमा वेदशास्त्राणि यैस्ते तथा च सर्वलोकेषु विख्याताः प्रसिद्धाः कवयः कवित्वं कुर्वाणा एवंभूता विद्वांसो यस्य प्रभोर्विषये देशमध्ये वसंति अथ च निर्धना धनरहिताः राजा तान्नैव जानाति परामर्शं न गृह्णाति तत् वसु-

धाधिपस्य राज्ञो जाड्यं मौर्ख्यम् । कवयस्तु सुधियस्तु अर्थं विनापीश्वराः समर्थाः यथा मणयो बहुमूल्यास्ते कुपरीक्षकैः कुत्सितपरीक्षकैः अज्ञात्वा अर्घतो मूल्यतः पातिताः न्यूनमूल्याः कृताः तर्ह्ययं दोषः परीक्षकाणां मणीनां परीक्षकाः कुत्स्याः स्युः कुत्सिता एव न तु मणयः ॥ १९ ॥

( भा० टी० ) शास्त्रोक्तशब्दोंसे जिनकी वाणी सुंदर है और शिष्योंके पढाने योग्य जिनकी विद्याहै और वे आपभी प्रसिद्ध हैं ऐसे कवि जिस राजाके देशमें निर्धन रहते हैं उसमें जडता राजाहीकी है और कवि-लोग तो विना द्रव्यकेभी श्रेष्ठ ही हैं जिन्होंने मणियोंका मोल घटाया वे परीक्षाकरनेवालेही खोटे हैं ॥ १९ ॥

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ॥
कल्पांतेष्वपि न प्रयाति निधनं विद्याख्यमंतर्धनं
येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते॥१६॥

( सं० टी० ) हर्तुरिति । भो नृपाः राजानः येषां विद्याख्यमंतर्धनं वर्तते तान्प्रति मानमहंकारमुज्झत त्यजत कथंभूतं विद्याख्यं धनं हर्तुस्तस्करस्य यद्गोचरं न याति तस्य दृश्यं न भवति पुनः कथंभूतं किमप्यनिर्वचनीयं शं सुखं पुष्णाति पुष्टं प्रापयति पुनः कथंभूतं सर्वदा सर्वकालेष्वपि अर्थिभ्यः शिष्येभ्यः प्रतिपाद्य-मानं दत्तं परामुत्कृष्टां वृद्धिं प्राप्नोति पुनः कल्पान्तेष्वपि निधनं नाशं न प्रयाति न प्राप्नोति एतादृशं येषामंतर्धनं तैः सह कः स्पर्धते स्पर्धां करोति ॥ १६ ॥

( भा० टी० ) चुरानेवालेको नहीं देख पडता और सदा सुखकी वृद्धि करता है और निरंतर याचकोंको दिया जाय तो परम वृद्धिको प्राप्त होता है और कल्पांतमेंभी जिसका नाश नहीं ऐसा विद्यारूपी अंतर्धन जिनके पास है तिनसे हे राजालोगो ! अभिमान छोडदो क्योंकि उनके समान जगत्में दूसरा कौन है ! ॥ १६ ॥

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान्संरुणद्धि ॥
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १७ ॥

( सं० टी० ) अधिगतेति । अधिगतः प्राप्तः परमार्थो यैस्तान्प्रति मावमंस्थाः तेषामपमानं मा कुरु । लक्ष्मीः लघु तृणमिव तान्नैव संरुणद्धि रोद्धुं न शक्नोति । अत्र दृष्टांतः अभिनवा सुंदरा मदलेखा मदजललेखा तया श्यामायमानानि गण्डस्थलानि येषां ते एवंभूतानां वारणानां बिसतंतुः कमलमूलतंतुर्वारणं न भवति रोद्धुं न शक्नोति । अतः पंडितानामवज्ञा न कर्तव्येत्यर्थः ॥ १७ ॥

( भा० टी० ) जिनको परमार्थ अर्थात् मोक्षपर्यंतका साधन प्राप्त है ऐसे पंडितोंका अपमान मत करो क्योंकि उनको तृणकी तुल्य तुम्हारी लक्ष्मी न रोकसकेगी जैसे नवीन मदकी धारासे शोभित श्याममस्तकवाले हाथीको कमलकी दंडीका सूत नहीं रोकसकता ॥ १७ ॥

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ॥
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्त्तिमपहर्तुमसौ समर्थः ॥ १८ ॥

( सं० टी० ) अम्भोजिनीति । यो यस्य स्वाभाविकः सद्गुणस्तं गुणं न कोऽपि हर्तुं शक्नोति । दृष्टांतः । अम्भसो जाताः कमलिन्यस्तासां वनं तत्र निवासो वसतिस्थानं तेन विलसदंभः एतादृशं हंसस्य विलासं विधाता ब्रह्मा नितरामत्यंतं कुपितश्चेद्विलासमेव हंति न तु दुग्धजलयोर्भेदविधौ यत् प्रसिद्धं वैदग्ध्यं चातुर्यं तस्य कीर्तिः तां सौऽपि हर्तुं न समर्थः तत्र इतरेषां का वार्त्ता ॥ १८ ॥

( भा० टी० ) हंसपर यदि विधाता कोप करे तो उसका कमलवनमें निवास और वहांका विलास नष्ट करसकता है परंतु उसके दूध और जल

विलगानेकी प्रसिद्ध पंडितता ( चतुराई ) की कीर्तिको विधाताभी नहीं नाश करसकता ॥ १८ ॥

केयूरा न विभूषयंति पुरुषं हारा न चंद्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्द्धजाः ॥
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयंते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥१९॥

( सं० टी० ) केयूरा इति । केयूरा बाहुभूषणानि चंद्रवदुज्ज्वला मुक्ताफलानां हाराः शुद्धं स्नानं विलेपनं गंधादिकं कुसुमं पुष्पं च अलंकृताः सज्जीकृता धूपिता मूर्द्धजाः केशाः एते पदार्थाः पुरुषं न भूषयंति यदा मौर्ख्यं पुरुषस्यास्ति तदेभिः किं भूषणं भवति तर्हि किम् एका वाक् सम्यक्प्रकारेण अलंकरोति शोभयति सापि वाक् या संस्कृता पुरुषेण धार्यते सकलविभूषणानि क्षीयंते एकं वाग्भूषणं न क्षीयते अतः सततं सर्वकालं वाग्भूषणमेव भूषणम् ॥ १९ ॥

( भा० टी० ) बिजायठ कंकण और चंद्रमाके समान उज्ज्वल मोतियोंके हार स्नान चंदन लेपन फूलोंका शृङ्गार और सुधरे हुए केशादि पुरुषोंको भूषित नहीं करसकते केवल वह वाणी जो संस्कारयुक्त धारण कीगई हो सो पुरुषको भूषित करसकती है और सब भूषण अवश्य क्षय होजाते हैं परन्तु केवल वाणीहीका भूषण भूषणकी ठौर रहजाता है ॥ १९ ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ॥
विद्या बंधुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूजिता न हि धनं विद्याविहीनः पशुः॥२०॥

( सं० टी० ) विद्येति । पुरुषस्य विद्याव्यतिरिक्तं यद्धनं तद्धनं न भवति तत्क्षीयते तस्करादिभिर्नीयते गोप्यं न भवति अतो विद्या नाम धनं तत्समीचीनं बहुगुणम् । कथंभूतं विद्याख्यं धनं नरस्याधिकं रूपं करोति तथा च प्रच्छन्नं गुप्तं धनं भवति विद्या

भोगकरी भोगान्करोति यशः कीर्तिं सुखं च करोति विद्या गुरूणां गुरुः क्षुद्रगुरवः सर्वविद्यासंपूर्णं प्राज्ञं प्रष्टुमायांति स प्राज्ञः गुरुणामपि गुरुः । अथ च गृणाति हितमुपदिशतीति गुरुरिति गुरुपदव्याख्यानमतो हितकर्त्री विद्यैव विदेशगमने विद्या बंधुजनः विदेशे ये जनास्ते विद्यया बंधुजना एव भवंति । विद्या परं दैवतं राजसु पूजिता विद्या येषां ते राज्ञां सभायां पूजिता भवंति । तथा धनाढ्याः पूजिता न भवंति अतो विद्याविहीनो यः स पशुरेव बोद्धव्यः ॥ २० ॥

( भा० टी० ) विद्यारूपी वस्तु मनुष्यका अधिकरूप और छिपाहुआ अंतर्धन है और विद्याही भोग यश और सुखकी संपादन करनेवाली और गुरुओंकी गुरुहै । परदेशमें विद्याही बन्धुजन है और विद्याही परमदेवता है और विद्याही राजालोंगोंमें पूज्य है कुछ धन नहीं पूजित है इसलिये विद्याविहीन नर पशु हैं ॥ २० ॥

क्षांतिश्चेत्कवचेन किं किमरिभिः क्रोधोस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ॥
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदि
व्रीडा चेत्किमुभूषणैःसुकविता यद्यस्तिराज्येनकिम्॥२१॥

( सं० टी० ) क्षांतिरिति । देहिनां प्राणिनां यदि क्षांतिः क्षमा वर्तते तदा कवचेन किं प्रयोजनम् । तथा च क्रोधोऽस्ति तर्हि अरिभिः शत्रुभिः किम् । ज्ञातिश्चेदनलेनाग्निना किम् । दायादाः सहजास्य इति वर्तन्ते ज्ञातयो यदा निंदादिपरुषं वदंति तेनैव दाहो भवति अग्नेः किं प्रयोजनम् । यदि सुहृत्सखा वर्तते तदा दिव्यौषधैः किं फलं प्रयोजनं स सुहृत्सर्वहितं करोति । यदि दुर्जनाः संति तदा सर्पैः किं सर्पा दंशविशेषेण मारयंति तथा दुर्जना अपि छिद्रान्वेषणेन मारयंति यदि अनवद्या सुंदरा संपूर्णा विद्यास्ति तदा धनैः किम् । यदि व्रीडा लज्जाऽसत्कर्मसु वर्तते तदा तदेव भूषणम् इतरभूषणैः किम् । यदि सुकविताचातुर्यमस्ति तदा राज्येन किम् ॥ २१ ॥

( भा० टी० ) यदि क्षमा हो तो कवचका क्या काम है, और जिस मनुष्यमें क्रोध है तो उसे शत्रुकी क्या आवश्यकता है, यदि जाति है तो उसे

अग्निका क्या प्रयोजन है और जो अपने इष्टमित्र समीप हैं तो दिव्य औषधियोंसे क्या फल है, जिसके दुर्जन विद्यमान है उसका सर्प और अधिक क्या करेंगे और जिसको निर्दोष विद्या है तो उसे धनसंचयसे क्या होगा और जिसमें लज्जा है तो उसके फिर और भूषण क्या हैं और जिसकी सुन्दर कविता है उसके आगे राज्य क्या है ॥ २१ ॥

दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ॥
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता ये चैवं
पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ २२ ॥

( सं० टी० ) दाक्षिण्येति । दाक्षिण्यमौदार्यमितराणि पदानि स्पष्टानि ॥ २२ ॥

( भा० टी० ) अपने कुटुम्बके विषे उदारता, परजनपर दया, दुर्जनसे सदा शठता, साधुनसे प्रीति, राजसभामें नीति, पण्डितोंसे नम्रता सुधाई, शत्रुजनोंमें शूरता, बड़े लोगोंमें क्षमा और स्त्रियोंमें धूर्तता जो पुरुष इस भाँति इन सब कलाओंमें निपुण तिन्हींमें लोकाचारकी स्थिति अर्थात् लोकमें वेही उत्तम होते हैं ॥ २२ ॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ॥
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ २३ ॥

( सं० टी० ) जाड्यमिति । सत्संगतिः पुंसां किं न करोतीति कथय वद, तत्किं धियो बुद्धेर्जाड्यं मौर्ख्यं मंदतां हरति पापं दूरीकरोति चेतः प्रसादयति स्वच्छं करोति सर्वदिक्षु कीर्तिं तनोति विस्तारयति ॥ २३ ॥

( भा० टी० ) बुद्धिकी जडताको हरती, वाणीमें सत्यको सींचती, मनको बढाती, पापको दूर करती, चित्तको प्रसन्न रखती और दिशाओंमें

कीर्तिको विस्तृत करतीहै, कहो तो यह सत्संगति पुरुषको क्या नहीं करतीहै ॥ २३ ॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ॥
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २४ ॥

( सं० टी० ) जयन्तीति । ते सुकृतिनः पुण्यवन्त इतरत्स्पष्टम् ॥ २४ ॥

( भा० टी० ) ऐसे पुण्यवान् रससिद्ध सबसे उत्तम कवीश्वर हैं जिनकी यशरूपी कायामें जरामरणका भय नहीं होता ॥ २४ ॥

सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निष्क्लेशलेशं मनः ॥
आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं
तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥ २५॥

( सं० टी० ) सूनुरिति । सूनुः पुत्रः सच्चरितः सद्वृत्तः सती प्रियतमा स्वामी प्रसादोन्मुखः स्निग्धं स्नेहयुक्तं मित्रम् अवंचकः परिजनः स्वकीयजनसमुदायः निष्क्लेशलेशमाधिरहितं स्वस्थं मनः आकारो रुचिरः स्थिरश्च विभवः सामर्थ्यं विद्ययाऽवदातं शोभितं मुखमिति एते पदार्थाः विष्टपहारिणि स्वर्गवासिनीष्टदहरौ नारायणे तुष्टे सति देहिना पुरुषेण प्राप्यन्ते ॥ २५ ॥

( भा० टी० ) सदाचरणवाला पुत्र, पतिव्रता स्त्री, सर्वदा अनुग्रहकरनेवाला स्वामी, प्रेमी मित्र, अवंचक कुटुंबके लोग, क्लेशके लेशसे रहित मन, सुंदर स्वरूप, स्थिर सम्पत्ति और विद्यासे शोभायमान मुख यह सब उस मनुष्यको प्राप्त होतेहैं जिसपर स्वर्गपति मनोरथदाता हरि प्रसन्न हों॥२५॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ॥
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पंथाः॥२६॥

( सं० टी० ) प्राणाघातादिति । प्राणाघातान्निवृत्तिः परधनहरणे संयमश्चित्तस्य नियमनं सत्यं वाक्यं योग्यकाले शक्त्या दानं परेषां युवतिजनकथासु मूकभावः तृष्णालक्षणं यत्स्रोतस्तस्य विभंगः आशाप्रवाहनिवर्तनं गुरुषु विनयो नम्रत्वं सर्वभूतेष्वनुकंपा कृपा एते पदार्थाः सर्वशास्त्रेषु सामान्यतो बाहुल्येन अनुपहतविधिः न त्यक्तो विधिर्मर्यादा यस्य स एवंभूतः श्रेयसां पुण्यानामेष पन्था मार्गः प्रोक्तः ॥ २६ ॥

( भा० टी० ) जीवहिंसासे निवृत्त रहना, पराए धन हरण करनेसे संयम करना, सत्य बोलना, समयपर यथाशक्ति दान देना, परस्त्रियोंकी कथामें मौन रहना, तृष्णाके प्रवाहको तोडना, बडेलोगोंमें नम्र रहना, प्राणीमात्रपर दया रखना, सब शास्त्रोंमें प्रवृत्ति रखना और नित्यनैमित्तिक कर्मोंको न छोडना यह सब मनुष्योंके कल्याणका पंथ है ॥ २६ ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ॥
विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ २७ ॥

( सं० टी० ) प्रारभ्यत इति । नीचैः क्षुद्रैर्विघ्नभयेन यत्किंचित्कर्म न प्रारभ्यते नानुष्ठीयते । मध्यस्था आदौ प्रारंभं कृत्वा पश्चाद्विघ्नैर्विहता बाधिताः संतः कार्यं तथैव परित्यजंति । उत्तमजनास्तु यदारब्धं कार्यं पुनःपुनः विघ्नेन प्रतिहता अपि न परित्यजंति ॥ २७ ॥

( भा० टी० ) विघ्नके भयसे नीचजन कार्यका आरंभही नहीं करते और मध्यमजन आरंभ करके विघ्नको देख कार्यको छोड बैठते हैं और उत्तमजन वारंवार विघ्न होनेसेभी कार्यका आरंभ करके परित्याग नहीं करते अर्थात् उसको पूराही करके छोडते हैं ॥ २७ ॥

असंतो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेप्यसुकरम् ॥

विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ २८ ॥

( सं० टी० ) असन्त इति । असंतो दुष्टा नाम्यर्थ्या :न याचनीयाः कृशधनः अल्पधनः सुहृदपि न याच्यः सर्वेषां प्रिया न्याय्या विध्युक्ता वृत्तिः असुभंगे प्राणभंगेपि मलिनं पापमसुकरं नैव करोति विपद्यापत्तौ उच्चैः स्थेयं महत्पदे स्थितो भवति स्वगौरवं न त्यजति महतां पदमनुविधेयं यथा महांतः स्वपदे स्वस्थाने महत्त्वेन स्थिताः तथैवायमप्यनुकरोति इति विषममसिधाराव्रतं नैष्ठिकव्रतं सतां केनोद्दिष्टमुपदिष्टं न केनापि । अयं सतां स्वाभाविको गुण इत्यर्थः ॥ २८ ॥

( भा० टी० ) सत्पुरुष लोग असतोंसे कुछ याचना नहीं करते और स्वल्पधनवाले सज्जनसेभी नहीं याचते, न्यायोक्त अपनी जीविका उन्हें प्रिय है, प्राणजानेपरभी मलिन कर्म उनसे दुष्कर है, विपत्तिमें ऊँचे बने रहते हैं और श्रेष्ठलोगोंके आचरणको धारण किए रहते हैं यह तरवारके धारसे कठोर व्रतको उन्हें किसने उपदेश किया मानों ब्रह्माने उपदेश किया है ॥ २८ ॥

इति विद्वत्प्रशंसा ।

## अथ मानशौर्यप्रशंसा ।

क्षुत्क्षामोऽपि जराकृशोपि शिथिलप्रायोपि कष्टां दशा-
मापन्नोपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ॥
मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २९ ॥

( सं० टी० ) क्षुत्क्षामेति । क्षुत्क्षामोपि क्षुधा क्षामो हीनसत्त्वोपि जरया कृशोपि शिथिलप्रायोपि एवं कष्टां दशामापन्नः प्राप्तोऽपि विपन्नदीधितिरपि निस्तेजा अपि प्राणेषु नश्यत्स्वपि मरणसमयं प्राप्तोपि । एवं जाते सति क्षुधानाशार्थं केसरी सिंहः किं जीर्णं तृणमत्ति भक्षयति ? । कथंभूतः केसरी । मत्ताश्च ते इभेंद्राश्च तेषां विभिन्ना विदारिताः

कुंभा गंडस्थलानि तेषां ये मांसकवलास्तेषां ग्रासास्तेषु बद्धा स्पृहा येन । पुनः कथं-भूतः । ये मानेनाभिमानेन महांतस्तेषां मध्येऽग्रेसरोऽग्रगण्यः अहंकारयुक्त एवं सिंहव-दहंकारवान् पुरुषार्थी पुरुषोऽपि क्षुद्रं कार्यं नावलम्बते ॥ २९ ॥

( भा० टी० ) भूंखके मारे दुर्बल, वृद्धावस्थासे क्लेशित, शक्तिहीन, कष्टकी दशाको प्राप्त, तेजहीन और प्राणभी नाश होनेपर हों तोभी मत्त-गजराजके विदारेहुये मस्तकके मांसके ग्रासका सर्वदा अभिलाषाकरनेवाला सिंह जो मानसे बडो अग्रगण्य है वह क्या सूखी घास खायगा ?॥ २९॥

स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये॥
सिंहो जंबुकमङ्कमागतमपि त्यक्त्वा निहंति द्विपं
सर्वः कृच्छ्रगतोऽपि वांछति जनः सत्त्वानुरूपं फलम्३०॥

( सं० टी० ) स्वल्पमिति । स्वल्पं स्नायुवसादयोऽन्तर्धातवस्तेषामवशेषोंशमात्रं यस्मिन् तथाभूतं तदपि मलिनं निर्मांसं मांसरहितम् एवंभूतमपि गोर्वृषस्यास्थि श्वा लब्ध्वा प्राप्य संतोषमेति । परं तु तत्तस्य शुनः क्षुधाशांत्यर्थं न भवति । सिंहश्च जम्बुकमङ्कं समीपमागतमपि त्यक्त्वा द्विपं हस्तिनमेव निहंति । एवं सर्वो जनः कृच्छ्रं कष्टं प्राप्तोऽपि सत्त्वानुरूपं सामर्थ्यानुरूपं फलमिच्छति ॥ ३० ॥

( भा० टी० ) छोटासा बैलके हाडका टुकडा कुछ पित्त और चर्बी लगाहुआ मलिन और निर्मांस पाकर कुत्ता प्रसन्न हो जाताहै यद्यपि उससे उसकी भूंख नहीं जाती और सिंह गोदमें आए हुए स्यारको छोडकरभी हाथीको जाकर मारताहै इससे यह सिद्ध हुआ कि, समस्तजन कैसेभी दुःखी होवें परन्तु वे अपने अपने पुरुषार्थके अनुसार फलकी इच्छा करते हैं॥ ३०॥

लांगूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनञ्च ॥
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ३१ ॥

स जातो येन जातेन याति वंशः समुन्नतिम् ॥
परिवर्तिनि संसारे मृतः को वा न जायते ॥ ३२ ॥
कुसुमस्तबकस्येव द्वे गती स्तो मनस्विनाम् ॥
मूर्ध्नि वा सर्वलोकस्य विशीर्यंत वनेऽथ वा ॥ ३३ ॥

(सं०टी०) लांगूलेति । श्वा पिण्डदस्य यः पिण्डं ग्रासं ददाति तस्य पुरतः लांगूलस्य पुच्छस्य-चालनम् । तथाऽधश्चरणावपातं चरणानां पतनम् । तथा भूमौ निपत्य पतित्वा वदनोदरयोर्दर्शनं च कुरुते । गजपुंगवो गजश्रेष्ठस्तु धीरं विलोकयति चाटुशतैः प्रियवचनशतैः प्रार्थितः सन् भुङ्क्ते । एवं क्षुद्रजनो मानहीनस्थलेऽवमानितोऽपि पुनः पुनर्याचत एव । धीरः प्रार्थितोऽपि नैवायाति । किं तु मानपुरःसरं गृह्णातीत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥

( भा० टी० ) पूंछ हिलाना, चरणोंपर झुककर शिर देना, पृथ्वीपर लोटके पेट और मुहँ दिखलाना इत्यादि दीनता कुत्ता टुकडा देनेवालेके आगे करताहै और गजराज अपने आहार देनेवालेकी ओर एकबेर गंभीर तासे देखताहै और अनेक भाँतिकी प्रार्थनासे भोजन करताहै ॥ वहीपुरुष जगत्में जन्मा, जिसके जन्मसे वंशकी उन्नति हो. नहीं तो इस चक्रकी नाई घूमतेभये संसारमें मरके कौन नहीं जन्म पाता है फूलके गुच्छेके समान श्रेष्ठ जनोंकी रीति दो प्रकारकी है या तो सबलोगोंके मस्तकहीपर शोभित होंगे अथवा वनहीमें शुष्क होके नष्ट होजायँगे ॥ ३१ ॥ ३२ ॥ ३३ ॥

संत्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषा-
स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ॥
द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भासुरौ
भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥ ३४ ॥

( सं० टी० ) संतीति । बृहस्पतिप्रभृतयः पञ्चषाः संभाविता महांतः संति तान्प्रत्येष राहुर्विशेषविक्रमरुचिः सन्न वैरायते न वैरं करोति । पर्वणि दिनेश्वरः सूर्यो-

निशाप्राणेश्वरश्चंद्र इमौ द्वावेव भासुरौ तेजस्करावपि ग्रसते कथंभूतः राहुः दानवपतिः शीर्षविशेषीकृतः । अतो भ्रातः एवं किमुक्तं वैरी सावशेषं न हंतव्यः अपि तु निःशेषम् ॥ ३४ ॥

( भा० टी० ) बृहस्पतिआदि औरभी पांच छः ग्रह आकाशमें श्रेष्ठ हैं पर विशेष पराक्रमकी इच्छाकरनेवाला राहु तिनके प्रति वैर नहीं करताहै, हे भाइयो ! देखो कि, अमावस और पूर्णिमाको दानवपति राहु जो केवल मस्तकहीमात्र रहगया है तिसपरभी दोही दिनेश्वर शोभाकर सूर्य और चन्द्रमा पूर्णतेजवालोंको जाकर ग्रसताहै ॥ ३४ ॥

**वहति भुवनश्रेणीं शेषः फणाफलकस्थितां**
**कमठपतिना मध्येपृष्ठं सदा स विधार्यते ॥**
**तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-**
**दहह महतां निःसीमानश्चरित्रविभूतयः ॥ ३५ ॥**

( सं० टी० ) वहतीति । शेषो भुवनश्रेणीं फणाफलकस्थितां फणामंडलस्थितां वहति । स शेषः कमठपतिना कूर्मेण मध्येपृष्ठं पृष्ठस्य मध्ये सदा धार्यते । तं कूर्मं पयोनिधिः समुद्रोऽनादरात्क्रोडो वराहस्तदधीनं कुरुते । एवं महतां चारित्रविभूतयः निःसीमानो मर्यादामतिक्रान्ता आतिशायिताः । अनेन महतां सामर्थ्यं निःसीममपरिमितमिति सूचितम् ॥ ३५ ॥

( भा० टी० ) चौदह भुवनकी पंक्तिको शेषजी अपने फणपर धारण करतेहैं और कच्छपजी अपनी पीठके मध्यमें तिन शेषजीकोभी धरतेहैं और उन कच्छपकोभी समुद्रने अनादरसे सूकरके अधीन करदिया है इससे यह सिद्ध हुआ कि, महज्जनोंके चारित्रकी विभूतिकी सीमा नहीं है ॥३५॥

**वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-**
**प्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः ॥**
**तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे**
**न चासौ संपातः पयसि पयसां पत्युरुचितः ॥३६॥**

( सं० टी० ) वरमिति । तुषाराद्रेर्हिमालयस्य सूनोः पुत्रस्य मैनाकस्य समदमघवन्मुक्तकुलिशप्रहारैः मदेन युक्तो मघवानिन्द्रस्तेन मुक्ताः कुलिशप्रहारास्तैः पक्षच्छेदः वरं श्रेष्ठः । कथंभूतैः । उद्गच्छन्तः ये बहलदहनस्योद्गारास्तैर्गुरुभिः पृथुभिः । एवंभूतैः खड्गप्रहारैः पितरि हिमाद्रौ क्लेशविवशे पक्षच्छेदेन क्लेशयुक्ते सति तं पितरं त्यक्त्वा पयसां पत्युः समुद्रस्य पयस्युदके संपातः भयेन पतनं नोचितम् ॥ ३६ ॥

( भा० टी० ) मदमें भरेहुए इन्द्रके चलाये वज्रके जो अत्यंत प्रज्वलित अग्निकी ज्वालाके समान प्रहार ( लगना ) उनसे मरजाना अच्छा रहा परन्तु अपने पिता हिमाचलको क्लेशके विवश ( पक्षहीन ) छोडकर मैनाकको उचित न था कि, जलोंके राजा समुद्रमें भाग कूदकर अपने पक्ष बचावे ॥ ३६ ॥

**यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिव कांतः ॥**
**तत्तेजस्वी पुरुषः परकृतविकृतिं कथं सहते ॥ ३७ ॥**

( सं० टी० ) यदिति । यदचेतनोऽपि सूर्यकान्तः सवितुः सूर्यस्य पादैः किरणैः स्पृष्टः सन् प्रज्वलतीव । तत् एवं सति सचेतनस्तेजस्वी पुरुषः परकृतां विकृतिं विकारं कथं सहते न सहत इत्यर्थः ॥ ३७ ॥

( भा० टी० ) सूर्यकान्तमणि यदि अचेतन है तोभी सूर्यके किरणरूपी पादस्पर्श करनेसे जलउठताहै ऐसेही तेजस्वी पुरुष परकृत अनादरको कैसे सहैं ॥ ३७ ॥

**सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ॥**
**प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३८ ॥**

( सं० टी० ) सिंह इति । शिशुरपि सिंहो मदेन मलिनाः कपोलभित्तयो येषां तेषु गजेषु निपतति । इयं सत्त्ववतां प्रकृतिः स्वभावः । अतः खलु निश्चयेन तेजसां हेतुः न वयः ॥ ३८ ॥

( भा० टी० ) सिंह यद्यपि बच्चाभी हो तोभी मदसे मलिन हैं गंडस्थल जिनके ऐसे हाथियोंपर पडता है तेजस्वियोंका यह स्वभावही है कुछ तेजका हेतु अवस्था नहीं होती ॥ ३८ ॥

इति मानशौर्यप्रशंसा ।

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छता-
च्छीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ॥
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥३९॥

( सं० टी० ) जातिरिति । जातिः स्वजातिः रसातलं यातु गच्छतु । गुणाः सद्गुणास्तेषां गणः समुदायः रसातलस्याप्यधो गच्छतात् । शीलं सद्वृत्तं शैलतटात्पर्वततटात्पततु । अभिजनः स्वजनो वह्निना संदह्यताम् । शौर्येण याचितुं न शक्यतेऽतस्तद्वैरि शौर्यं तस्मिन्वज्रमाशु शीघ्रं निपततु । एवं सर्वस्य हानिर्भवतु । परन्तु नोस्माकं केवलं मुख्योर्थो द्रव्यमस्तु । किमर्थम् । येनैकेनार्थेन विना पूर्वोक्तगुणास्तृणलवप्राया भवन्ति ॥ ३९ ॥

( भा० टी० ) जाति रसातलमें जाय और सर्व गुण उससेभी अधिक नीचे जायँ और शील पर्वतसे गिरके नाश होजाय और शूरतारूपी शत्रुपर वज्र पडै परंतु हमको केवल द्रव्यहीसे काम है कि, जिसके विना सब गुण तृण टुकडेके समान हैं ॥ ३९ ॥

तानीन्द्रियाणि सकलानि तदेव कर्म
सा बुद्धिरप्रतिहता वचनं तदेव ॥
अर्थोष्मणा विरहितः पुरुषः स एव
त्वन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ४० ॥

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान्गुणज्ञः ॥
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ४१ ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-
द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ॥

ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान्मैत्री
चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ४२ ॥
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ॥
यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥४३॥
मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ॥
कलाशेषश्चन्द्रः सुरतमृदिता बालललना
तनिम्ना शोभंते गलितविभवाश्चार्थिषु नृपाः ॥ ४४ ॥

( सं० टी० ) तानीति । सामर्थ्ये सति यानि पूर्वमिंद्रियाणि आसन् तान्येव संति । तदेव कर्म बुद्धिरपि सैव । कीदृशी अप्रातिहता नाशं न प्राप्ता वचनमपि तदेव वक्तृशक्तिः । एवं सर्वथा पूर्वं यदासीत्तदस्ति । परन्तु एकोर्थो द्रव्यं तस्योष्मा तेन विरहितः शून्यः स एव पुरुषः क्षणेनान्यो भवतीति विचित्रमाश्चर्यम् ॥ ४० ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥

भा० टी० ) सब इंद्रियें वही हैं और व्यवहारभी सब वही है और वही प्रबल बुद्धिभी है और वचनभी वैसाही है परन्तु एक द्रव्यकी उष्णता विना वही पुरुष क्षणमात्रमें औरका और होजाता है यह विचित्र गति है ॥ जिसके पास द्रव्य है वही नर कुलीन, पंडित, गुणज्ञ, वक्ता और दर्शनयोग्य है इससे यह सिद्ध हुआ कि, सब गुण सुवर्णके आश्रय रहते हैं ॥ दुष्टमंत्रियोंके मंत्रसे राजा, संगसे तपस्वी, दुलारसे पुत्र, न पढनेसे ब्राह्मण, कुपुत्रसे कुल, खलकी सेवासे शील, मद्यपानसे लज्जा, विनादेखेसे खेती, परदेशमें रहनेसे स्नेह, अनम्रतासे मैत्री, अनीतिसे वृद्धि और प्रमादपूर्वक लुटानेसे धन नष्ट होता है ॥ दान भोग और नाश यही तीन धनकी गति हैं जिसने नहीं दिया और जो अपने भोगमें न लाया उसके धनकी नाशरूप तीसरी गति होती है ॥ सानसे खरादी हुई मणि, संग्रामको जीतनेवाला खड्गसे हत, मदसे उतरा कृश हाथी, शरदऋतुकी

सूखेहुये वालुकामय तीरवाली नदी, दूजका चंद्रमा, सुरतकी मलीहुई बाला स्त्री और अतिदान देनेसे दरिद्री राजा, इत्यादि सबकी दुर्बलताहीकी शोभा है ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये
स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम् ॥
अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिना-
मवस्था वस्तूनि प्रथयति च संकोचयति च ॥४५॥

( सं० टी० ) परिक्षीणेति । कश्चित्पुरुषः क्षीणः सन्यवानां प्रसृतये स्पृहयति स्पृहां करोति । स एव पश्चादग्रे लक्ष्म्या संपूर्णः सन्निमां धरित्रीं तृणसमां गणयति । अतो धनिनामनैकांत्यादेकस्थितेरभावादवस्था अर्थेषु प्रयोजनेषु गुरुलघुतया वस्तूनि प्रथयति संकोचयति च । यदा कालेनावस्थाया गुरुत्वं भवति तदा गुरुत्वमेवेच्छति । यदा च तस्या लघुत्वं भवति तदा लघुत्वमेवांगीकरोति । एवं कालपरत्वेनावस्थाभेदो भवति ॥ ४९ ॥

( भा० टी० ) जब कोई परिक्षीण अर्थात् निर्धन अवस्थामें होता है तब एक पसर यवकी इच्छा करता है और वही मनुष्य जब सम्पूर्ण संपन्न अर्थात् धनिक अवस्थामें होजाताहै तब पृथ्वीको तृणसमान गिनता है । इस कारण यही दोनों चंचल अवस्था पुरुषको गुरु और लघु बनाती हैं और वस्तुओंकोभी फैलाती और समेटती हैं ॥ ४९ ॥

राजन्दुधुक्षसि यदि क्षितिधेनुमेनां
तेनाद्य वत्समिव लोकममुं पुषाण ॥
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः ॥ ४६ ॥

( सं० टी० ) राजन्निति । हे राजन् ! यद्येनां क्षितिधेनुं दुधुक्षसि दोग्धुमिच्छसि तेन कारणेनाद्याधुनेमं प्रजालोकं वत्समिव पुषाण पोषयेति । तस्मिन्नलोके वत्से सम्य-

क्परिपोष्यमाणे सतीयं भूमिः कल्पलतेवानिशं सर्वकालं नानाफलैः फलति फलं ददाति ॥ ४६ ॥

( भा० टी० ) हे राजा ! जो पृथ्वीरूपी धेनुको दुहा चाहते हो तो वछरेके समान प्रजालोकोंका पोषण करो जब यह प्रजारूपी बछडा अच्छी भाँतिसे निरन्तर पोषाजायगा तब कल्पलताके तुल्य पृथ्वी अनेक प्रकारके फल देगी ॥ ४६ ॥

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ॥
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ४७ ॥
विद्या कीर्तिः पालनं ब्राह्मणानां
दानं भोगो मित्रसंरक्षणं च ॥
येषामेते षड् गुणा न प्रवृत्ताः
कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ४८ ॥

( सं० टी० ) सत्येति । कुत्रचिदव्ययं सर्वत्र वक्तव्यम् । कुत्रचित्सत्या सत्यत्वेन, अनृता अनृतत्वेन, परुषा काठिन्येन, मृदुवादिनी मधुरभाषणेन, हिंस्रा हिंसया, दयालुः कृपात्वेन, अर्थपरार्थग्रहणेन, वदान्या दातृत्वेन नित्यव्यया, यस्य यन्नियमितं तेन प्रचुरं नित्यं धनानामागमनं यस्यां तादृशी एवं नृपते राज्ञो नीतिः कर्त्तव्याऽनेकरूपा । यथा वारांगना वेश्या नानावेषान् करोति तथा नीतिरपि नानारूपा भवति ॥ ४७॥४८ ॥

( भा० टी० ) कहीं सत्य कहीं असत्यवादिनी, कहीं कठोर कहीं प्रियभाषिणी, कहीं हिंसाकरनेवाली कहीं दयालु, कहीं लोभी कहीं उदार, कहीं नित्यप्रति बहुतसा द्रव्य उठानेवाली और कहीं बहुतही संचय करनेवाली यह राजनीति वेश्याकी नाईं अनेकरूपसे रहती है ॥ विद्या, कीर्ति, ब्राह्मणोंका पालन, दान, भोग और मित्रोंकी रक्षा, जिनमें ये गुण सम्पादन न हुये तिन्हें राजाकी सेवाका क्या फल है ॥ ४७ ॥ ४८ ॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेपि नितरां मेरौ ततो नाधिकम् ॥
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ४९॥
त्वमेव चातकाधारोऽसीति केषां न गोचरः ॥
किमम्भोदवरास्माकं कार्पण्योक्तिः प्रतीक्ष्यते ॥ ५० ॥
रेरे चातक सावधानमनसा मित्र क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेपि नैतादृशाः ॥
केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः॥५१॥

## अथ दुर्जननिन्दा ।

अकरुणत्वमकारणविग्रहः
परधने परयोषिति च स्पृहा ॥
सुजनबन्धुजनेष्वसहिष्णुता
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ ५२ ॥
दुर्जनः परिहर्तव्यो विद्यया भूषितोऽपि सन् ॥
मणिनालङ्कृतः सर्पः किमसौ न भयङ्करः ॥५३ ॥

(सं०टी० ) यदिति । धात्रा ब्रह्मणा यन्निजे स्वकीये भालपट्टे स्तोकमल्पं वा महद्बहु धनं लिखितं तदेव पुरुषः मरुस्थले निर्जलदेशे मेरौ च सुवर्णाद्रौ नितरामतिशयेन प्राप्नोति । अतस्त्वं धीरो भव । वित्तवत्सु द्रव्याढ्येषु कृपणां दीनां वृत्तिं वर्तनं जीवनं वा वृथा मा कृथाः मा कुरु । अत्र दृष्टांतः । पश्य कूपे अथ वा पयोनिधौ समुद्रे घटः तुल्यं यावत्प्रमाणं जलं गृह्णाति ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

( भा० टी० ) विधाताने जो अपने ललाटमें लिखदिया है किंचित् धन अथवा बहुत चाहे मारवाडकी भूमिमें भी जाय बैठे उसे वह निरंतर प्राप्त होगा उससे अधिक सुमेरुपरभी जानेसे न मिलेगा इसलिये धैर्य धरो और धनवालोंके निकट वृथा याचना न करो, क्योंकि देखो कूप और समुद्रमें घडा समानही जल ग्रहण करता है ॥ तुमही मुझ पपीहाके आधार हो, हे श्रेष्ठ मेघ ! यह बात किसपर नहीं प्रसिद्ध है ? अब तुम हमारीदीनताका क्या पैंडा देखते हो । अरे चातक ! सावधान मनसे क्षणमात्र हमारी बात सुन कि, मेघ आकाशमें बहुतसे ह परन्तु सब ऐसे नहीं, कितने तो वर्षाकर पृथ्वीको पूर्ण कर देते हैं और कितने वृथाही गर्जके चले जाते हैं. हे मित्र ! इसलिये जिस जिसको तू देखे उसीके आगे दीनताके वाक्य मत कह ॥ करुणा न करना और अकारण विग्रह अर्थात् लडाई करना पराये धन और स्त्रीकी सर्वदा इच्छा रखना अपने कुटुम्ब और मित्रकी न सहना ये बातें दुष्ट जनोंकी स्वाभाविक सिद्ध हैं ॥दुर्जन यद्यपि विद्यावान्भी हो तोभी परित्यागहीके योग्यहोता है जैसे मणिसे भूषित सर्प क्या भयंकर नहीं होता ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि ॥
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नांकितः ५४
लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्॥
सौजन्यं यदि किं गुणैः स्वमहिमा यद्यस्ति किं मंडनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना॥५५॥
शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मखमनक्षरं स्वाकृतेः ॥

प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५६ ॥

( सं० टी० ) जाड्यमिति । गुणिनः गुणो यो दुर्जनैर्नाङ्कितः स को नाम भवेत्। नास्त्येव । तत्कथम् । ह्रीमति लज्जावति पुरुषे जाड्यं मौर्ख्यं स्थापयंति, व्रतरुचौ सुष्ठु-व्रतधारके दंभो गण्यते, शुचौ शुचिमति कैतवं प्रतारणम्, शूरे निर्घृणता निर्दयत्वं, मुनौ मौनवति विमातिता प्रज्ञाराहित्यम् वक्तुमशक्तिः, प्रियालापिनि प्रियवक्तरि दैन्यं दारिद्र्येण, तेजस्विन्यवलिप्तता, वक्तरि मुखरता वाचालता, स्थिरे पुरुषे अशक्तिः । एवं सर्वेष्वपि गुणेषु दोषारोपो दुर्जनैः क्रियते । एवं दुर्जनैर्नाङ्कितो न निंदितः इत्थं गुणो नास्ति ॥ ९४ ॥ ९९ ॥ ९६ ॥

( भा० टी० ) लज्जावान्पुरुषको शिथिल, व्रतधारीको दंभी, पवित्रको कपटी, शूरको निर्दयी, सीधेको मूर्ख, प्रियकहनेवालेको दीन, तेजस्वीको गर्वीला, वक्ताको बकवादी और स्थिरचित्तवालेको आलसी कहते हैं । इससे यह जानपडता है कि, गुणियोंमें कौन ऐसा गुण है कि, जिसमें दुर्जनोंने कलंक नहीं लगाया ॥ लोभ जिसमें है फिर उसमें और अवगुण क्या चाहिये, जो कुटिल है उसे और पातक करनेकी क्या आवश्यकता है, सत्यवक्ताको तपका क्या प्रयोजन है, जिसका मन शुद्ध है उसे तीर्थ-करनेसे क्या अधिक फल होगा, जो सज्जन हैं उन्हें मित्र और कुटुम्बकी क्या कमी है; यशस्वीपुरुषोंको यशसे बढके क्या भूषण है सद्विद्यावा-लेको और दूजे धनकी क्या अपेक्षा है, जिसका सर्वत्र अपयश है उसे मृत्यु पानेसे क्या अधिक होगा ॥ दिनका मलीन चन्द्रमा, यौवनहीन स्त्री, विना कमलका सरोवर, सुन्दर रूपवाला मूर्ख, धनवान् कृपण, सज्जन दरिद्री और राजसभामें खल ये सातों हमारे हृदयमें काँटेकी नाईं गडते हैं ॥ ९४ ॥ ५९ ॥ ९६ ॥

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ॥
होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ५७ ॥

( सं० टी० ) नेति । चण्डकोपानामुग्राणां भूभुजां राज्ञां काश्चिदात्मीयः प्रीत्यर्हो न भवति । यथा पावकोऽग्निर्होतारं होमकर्तारमपि जुह्वानं होमसमयेऽपि स्पृष्टः सन्दहति ॥ ५७ ॥

( भा० टी० ) प्रचण्डक्रोधवाले राजोंका कोई मित्र नहीं, जैसे होमकरनेवालेको भी अग्नि छूजाय तो जलाही देता है ॥ ५७ ॥

मौनान्मूकः प्रवचनपटुश्चाटुको जल्पको वा
धृष्टः पार्श्वे वसति च तदा दूरतश्चाप्रगल्भः ॥
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ५८ ॥

( सं० टी० ) मौनादिति । यदा सेवकेन मौनं धृतं तदा मूकः, प्रवचनपटुश्चेच्चाटुको वाचालोऽथ वा जल्पकः, यत्किंचिद्वदति पार्श्वे स्थितः सन्धृष्टः, दूरतो यदा भवति तदाऽप्रगल्भः, क्षांतिः क्षमा धृता चेद्भीरुर्भयभीतः, यदि न सहते तदा नाभिजातो मूर्खोऽप्रयोजनकः । एवं प्रायशः सेवाधर्मः परमगहनः कठिनो योगिनामप्यगम्यः ज्ञातुमशक्यः ॥ ५८ ॥

( भा० टी० ) मौन रहनेसे गूंगा, वक्ता होनेसे वाचाल और बकवादी, समीप होनेसे ढीठ, दूर रहनेसे मूर्ख, क्षमा करनेसे कादर और न सहनेसे कुलहीन कहलाता है । तात्पर्य यह है कि, सेवाधर्म परमकठिन है योगियोंको अगम्य है ॥ ५८ ॥

उद्भासिताखिलखलस्य विशृंखलस्य
प्राग्जातविस्तृतनिजाधमकर्मवृत्तेः ॥
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः ॥ ५९ ॥
आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ॥

दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ६० ॥
मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ॥
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥६१॥

इति दुर्जननिन्दा ।

## अथ सुजनप्रशंसा ।

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ॥
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले-
ष्वेते येषु वसंति निर्मलगुणास्तेभ्यो नरेभ्यो नमः॥६२॥
विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ॥
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६३ ॥

( सं० टी० ) उद्भासितेति । नीचस्य क्षुद्रजनस्य गोचरगतैः समीपवर्तिभिः पुरुषैः कैः सुखमास्यते उपविश्यते । कथंभूतस्य नीचस्य उद्भासिताखिलखलस्य उद्भासिताः प्रकटीकृताः अखिलाः समस्ताः खला येन खलत्वं प्रकटीकृतं पुनः प्राक् पूर्वं जाता इदानीं विस्तृता निजा स्वकीयाधमकर्मणां वृत्तिर्येन । एवं सति दैवाददृष्टवशात्प्राप्तो विभवो येन । पुनः कथंभूतस्य । गुणान् सद्गुणान् द्वेष्टीति गुणद्विट् तस्य गुणद्विषः । एवंभूतगुणस्य समीपे कैरपि सुखेन नैव उपवेष्टुं शक्यते अथ वा सुखं प्राप्यते ॥ ५९॥ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

( भा० टी० ) अनेक खलोंको प्रकाश करनेवाला निरंकुश कि; जिसके पूर्वजन्मके मन्द अधम कर्म उदय होरहे हैं और दैवकरके धनभी उसे प्राप्त

है और गुणोंसे द्वेष करनेवाला ऐसे नीचके वश रहकर किसने सुख पाया है ॥ आरम्भमें बहुत लंबी चौडी फिर क्रमसे पूर्वार्द्ध दोपहरकी छायाके समान खलोंकी मैत्री क्षण क्षण घटती जाती है और सज्जनोंकी मैत्री पहिले बहुत किंचित् फिर क्रमही क्रम परार्द्ध दोपहरकी छायाकी नाईं प्रतिक्षण बढती जाती है ॥ हरिण, मछली और सज्जन, तृण, जल और सन्तोष करके अपनी जीविका करते हैं पर व्याध, धीवर और कुटिललोग विना प्रयोजनही इनसे संसारमें वैर रखते हैं ॥ सज्जनोंके संगकी वांछा, पराये गुणमें प्रीति, बडे लोगोंसे नम्रता, विद्यामें व्यसन, अपनीही स्त्रीसे रति, लोकनिंदासे भय, महेश्वरमें भक्ति, आत्माके दमनकी शक्ति और खलके संगका त्याग य निर्मल गुण जिन पुरुषोंमें हैं तिन्हैं हम नमस्कार करते हैं ॥ विपत्तिमें धैर्य, ऐश्वर्यमें क्षमा, सभाके मध्य वार्तामें चतुराई, संग्राममें पराक्रम, अपने यशमें रुचि और शास्त्रमें व्यसन ये बातें महात्माओंमें स्वाभाविक सिद्ध होती हैं ॥ ५९ ॥ ६० ॥ ६१ ॥६२॥६३॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ॥
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ६४ ॥
करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ॥
हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं
विनाप्यैश्वर्येण प्रकृतिमहतां मंडनमिदम् ॥ ६५ ॥
संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ॥
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ६६ ॥

( सं० टी० ) प्रदानमिति । प्रदानं प्रकर्षेण यद्दत्तं तच्छन्नमाच्छादितं, गृहमुपगतस्य संभ्रमविधिः, आदरविधिः, प्रियं कृत्वा मौनम् एकस्य प्रियं कृतं चेन्न वदति,

सदासि सभायामुपकृतेरेकेनोपकारः कृतस्तस्य कथनं करोति, लक्ष्म्यां सत्यामनुत्सेकोऽ-गर्वः,परस्य सत्कथा निरभिभवसाराः निन्दारहिताः कर्तव्याः इदं व्रतमसिधारावत्कठिनं सतां केनोपदिष्टम् न केनापि, अयं सतां स्वाभाविको गुणः ॥ ६४ ॥ ६५ ॥ ६६॥

(भा० टी०) दानको गुप्त रखना, अपने घर आयेहुए पुरुषका सत्कार करना, पराया भला कर मौन रहना, दूसरेके किये हुए उपकारको सभामें वर्णन करना, धन पाकर गर्व न करना और पराई चर्चामें उसके निरादरकी बात बचाकर कहना यह तरवारकी धाराके समान कठिन व्रत सत्पुरुषोंको किसने उपदेश किया है ॥ हाथ दानसे, मस्तक बडे लोगोंके पैर पडनेसे, मुख सत्य बोलनेसे, दोनों भुजा अतुल पराक्रमसे, हृदय स्वच्छ वृत्तिसे, कान शास्त्रश्रवणसे, बडाईके योग्य होते हैं और यही सत्पुरुषोंके विना ऐश्वर्यकेभी भूषण हैं ॥ संपत्तिमें महात्मालोगोंका चित्त कमलसेभी कोमल रहताहै और आपत्तिमें पर्वतकी बडी शिलाकी तुल्य कठिन हो जाता है ॥ ६४ ॥ ६५ ॥ ६६ ॥

संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ॥
स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणाः संसर्गतो देहिनाम् ॥६७॥

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ॥
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥

एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा ॥

एको वासः पत्तने वा वने वा
एका नारी सुन्दरी वा दरी वा ॥ ६९ ॥

( सं० टी० ) संतप्तेति । एकमेव जलं तत्संसर्गतोऽनेकगुणं भवति तद्यथा । संतप्तायसि संतप्ते लोहे क्षिप्तं चेत्पयसो नामापि न ज्ञायते, अभाव एव । तदेव जलं नलिनीपत्रे स्थितं मुक्ताकारतया राजते, तदेव जलं स्वातीमहानक्षत्रे मेघात्सागरे पतितं तदपि शुक्तिकामध्यगतं चेन्मुक्ताफलं जायते । एवं प्रायेण प्रायशः पुरुषस्योत्तम-मध्यमाधमगुणाः संसर्गतो जायन्ते ॥ ६७ ॥ ६८ ॥ ६९ ॥

( भा० टी० ) तप्त लोहेपर जलकी बूँद पडनेसे उसका नाम भी नहीं रहता वही बूँद कमलके पत्रपर पडनेसे मोतीके सदृश शोभित होता है, फिर वही बूँद स्वाती नक्षत्रमें समुद्रकी सीपमें पडनेसे साक्षात् मोती हो जाता है । इससे यह सिद्ध हुआ कि, प्रायः अधम मध्यम और उत्तम गुण संसर्ग ( संग ) हीसे होते हैं ॥ जो अपने चरित्रोंसे अपने पिताको प्रसन्न रक्खै ऐसा पुत्र, जो अपने पतिका निरंतर हित चाहै ऐसी स्त्री और जो आपत्ति और सुख दोनोंमें समान भाव रक्खै ऐसा मित्र. जगत्में यह तीनों पुण्यवान्हीको मिलते हैं ॥ एक देवको ग्रहण करना चाहिये केशव हों वा शिव, एक मित्र करना चाहिये राजा हो वा तपस्वी, एक जगह वास चाहिये नगर हो वा वन, और एक सुंदरी स्त्रीसे प्रीति हो वा कंदरा (गुहा) से हो ॥ ६७ ॥ ६८ ॥ ६९ ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः
स्वार्थान्सम्पादयन्तो विततप्रियतरारम्भयत्नाः परार्थे ॥
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्जनान्दूषयन्तः
सन्तः साश्चर्यचर्या जगतिबहुमताःकस्यनाभ्यर्चनीयाः ७०

इति सुजनप्रशंसा ।

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवांबुभिर्भूरि विलम्बिनो घनाः॥
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ७१ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कंकणेन ॥
विभाति कायः करुणापराणां परोपकारैर्न तु चंदनेन॥७२॥

पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान्प्रकटीकरोति ॥
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ७३ ॥

( सं० टी० ) नम्रेति । नम्रत्वेनोन्नमन्त उच्चा मान्या भवन्ति, स्वान् स्वकीयान् गुणान् परेषां गुणानां कथनैः ख्यापयंतः कथयंतः स्वान् गुणान् स्वयं न वदंति परेषां गुणानुवादाः क्रियन्ते तैरेव स्वगुणानुवर्णनं क्रियते इति । स्वार्थान् संपादयन्तः; परस्यार्थे विततः विस्तृताः प्रियतराश्चारम्भाः कर्माणि यत्नाश्च येषां ते, दुर्जनान् क्षांत्यैव क्षमयैव दूषयंतः आश्चर्येण सहिता साश्चर्या गतिर्येषां ते तथाभूताः । जगति बहुमता मान्याः सन्तः कस्य नाभ्यर्चनीयाः पूज्या न भवंति । एवंभूताः संतः सर्वेषां पूज्या एवेति भावः ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥

( भा० टी० ) नम्रतासे ऊँचे होते हैं, और परगुणकथन करनेसे अपना गुण प्रसिद्ध करते हैं और निरंतर विस्तारपूर्वक परकार्य करनेसे अपना कार्य संपादन करते हैं और निन्दक दुष्टोंको अपनी क्षमाहीसे दूषित करदेते हैं ऐसे आश्चर्य आचरणवाले बहुमाननीय संतलोग जगत्में किसके पूजनीय नहीं हैं ॥ जैसे फल होनेसे वृक्ष नम्र होते हैं, जैसे नवीन जल भर-नेसे मेघ भूमिपर झुकजाते हैं वैसेही सत्पुरुषभी संपत्ति पायके उद्धत नहीं

होते किंतु नमते हैं अर्थात परोपकारी जीवोंका यही स्वभाव है ॥ कानकी शोभा शास्त्रश्रवणसे है कुंडल पहिरनेसे नहीं, हाथकी शोभा दान करनेसे है कङ्कण पहिरनेसे नहीं, करुणामय जनोंके देहकी शोभा परोपकार करनेसे है कुछ चंदन लगानेसे नहीं ॥ मित्रको पाप करनेसे वर्जित करै और उसके हितकी बात उसे उपदेश करै, उसकी गुप्त बातको छिपावे, गुणोंको प्रगट करै, आपत्तिकालमें साथ न छोडै और समय पडेपर यथाशक्ति द्रव्यभी दे यह अच्छे मित्रोंका लक्षण संतोनें कहा है॥ ७० ॥ ७१ ॥७२॥७३ ॥

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकासयति कैरवचक्रवालम् ॥
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते सुकृताभियोगाः ॥ ७४ ॥

( सं० टी० ) पद्माकरेति । पद्माकरं सूर्यविकासिकमलानां समुदायं दिनकरो विकासितं करोति, तथैव चंद्रो रात्रिविकासिकैरवचक्रवालं पद्मसमुदायं विकासितं करोति, एवं जलधरो मेघोऽप्रार्थितः सन् जलं ददाति यतः सन्तः स्वयं परहिते सुकृताभियोगा अप्रार्थिताः संतः स्वयं परहित कुर्वन्ति तेषां स्वभाव एवायम् ॥ ७४ ॥

( भा० टी० ) सूर्य विना याचे स्वतः कमलके समूहको विकासित करता है, चंद्रमा विना याचे कुमुदके समूहको प्रफुल्लित करता है, और मेघ विना याचनाकिये सृष्टिमें जल देता है ऐसेही संतजन विनायाचेही पराये हितके हेतु आपसे आप उद्योग करते हैं ॥ ७४ ॥

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ॥
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये निघ्नंति निरर्थकं परहितं ते के न जानीमहे॥७५॥

( सं० टी० ) एक इति । स्वार्थं परित्यज्य परार्थघटकाः परकार्यं कुर्वंति ते सत्पुरुषाः, स्वार्थस्याविरोधेनादौ स्वकार्यं कृत्वा पश्चात्परकार्यं ये कुर्वंति ते सामान्या मध्यमाः, ये स्वार्थाय परहितं निघ्नन्ति ते अमी मानुषेषु राक्षसाः कनिष्ठाः, तु पुनरिति निश्चयेन ये निरर्थकं परहितं निघ्नंति ते के न जानीमहे तेषां लक्षणं न ज्ञायते ॥७५॥

( भा० टी० ) सत्पुरुष वे हैं जो अपना अर्थ छोड दूसरेके कार्यको साधते हैं, सामान्यपुरुष वे ह जो अपने और पराये दोनों कायाको साधन करते हैं आर मनुष्योंमें राक्षस वे पुरुष हैं जो अपने हितके अर्थ पराये कार्यको नष्ट करते हैं, और जो व्यर्थ पराये कार्यकी हानि करते हैं वे कैसे पुरुष हैं उन्हें हम नहीं जानते ॥ ७५ ॥

**क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः**
**क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ॥**
**गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं**
**तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥७६॥**

( सं० टी० ) क्षीरेणेति । पुरा पूर्वं क्षीरेण दुग्धेन आत्मगतायोदकायाखिलाः सर्वे गुणा हि निश्चयेन दत्ता अत उभयोर्मैत्री जाता तदनंतरं तेन पयसोदकेन क्षीरे दुग्धे तापमवेक्ष्य दृष्ट्वा आत्मा स्वदेहः कृशानौ हुतः दुग्धे तप्तेऽन्तर्गतं जलं ज्वलति तदनंतरं स्वमित्रेण जलेन मदर्थं धर्मात्मा कृशानौ हुतः तर्ह्यहमपि पतिष्यामीति बुद्ध्या मित्रापदं दृष्ट्वा तत्क्षीरं पावकं गंतुमुन्मन उत्कण्ठितमभवत् । पुनरपि तत् क्षीरं जलेन प्रोक्षितं सच्छाम्यति एतद्युक्तमुचितम् । यतः सतां मैत्रीगुणास्तादृशा एव भवन्ति ॥ ७६ ॥

( भा० टी० ) दूधमें जब जल मिला तो उस दूधने अपना सब गुण और रूप अपने जलरूपी मित्रको दे दिया, फिर दूधमें ताप देखकर जलने अपना शरीर अग्निमें होमदिया अर्थात् जलगया फिर दूधने भी मित्रकी इस आपत्तिको देखकर अग्निमें गिरना चाहा, फिर जलके छींटे पाके अपने मित्रको आया जान ठंडाहो बैठगया सो उचितही है क्योंकि, सत्पुरुषोंकी मैत्री ऐसीही होती है ॥ ७६ ॥

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनः शिखरिणां गणाः शेरते ॥
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः॥७७॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ॥
मान्यान्मानय विद्विषोप्यनुनय प्रख्यापय स्वान्गुणा-
न्कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम्॥७८॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ॥
परगुणपरमाणून्पर्वतिकृत्य नित्यं
निजहृदि विकसंतः सन्ति सन्तः कियन्तः॥७९॥

( सं० टी० ) इत इति । अहो इत्याश्चर्ये सिन्धोः समुद्रस्य वपुर्विततं विस्तृतमूर्जितं महद्भरसहं भरं भारं सहते । तत्कथम इत एकतः केशवः स्वपिति निद्रां करोति। इत एकतस्तदीयद्विषां केशववैरिणामसुराणां कुलं शेते । एकतः शरणागताः शिखरिणः पर्वताः पक्षिणश्च शेरते एकतः समस्तसंवर्तकैः सह वडवानलः शेते एवं विलक्षणरूपं परस्य भरसहं वपुरित्याश्चर्यम् ॥ ७७ ॥ ७८ ॥ ७९ ॥

( भा० टी० ) समुद्रमें एक ओर शेषशायी विष्णु सोते हैं, एक ओर विष्णुके शत्रु राक्षसनका कुल रहता है, एक ओर शरणार्थी पर्वतोंके समूह पडे हैं और एकओर वडवानल प्रलयकी अग्निसहित जलको औटाय रहा है परन्तु इन सबोंसे वह कुछ नहीं घबराता है इससे यह जान पडा कि समुद्रका शरीर बडा विशाल बलवान् और भारसहनेवाला है भाव यह कि, सत्पुरुषभी समुद्रवत

होते हैं ॥ तृष्णाको छेद, क्षमाको सेव, मदको त्याग, पापमें प्रीति मत करो, सत्य बोलो, साधुजनोंकी मर्यादा ( मार्ग ) को प्राप्त हो, पंडितोंका सेवन करो, मान्यजनोंको मानो, शत्रुओंकोभी प्रसन्न रक्खो, अपने गुणोंको प्रसिद्ध करो, अपनी कीर्तिका पालन करो और दुखियोंपर दया रक्खो यही सत्पुरुषोंका लक्षण है ॥ मन, वाणी और शरीरमें पुण्यरूपी अमृतसे भरे हुये त्रिभुवनको उपकारोंसे तृप्त करनेवाले और परमाणुसरीखे अल्प पराये गुणोंको पर्वतसा बढाके अपने हृदयमें प्रसन्न होनेवाले कोई विरले ही सन्त हैं ॥ ७७ ॥ ७८ ॥ ७९ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिताश्च तरवस्तरवस्त एव ॥
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिंबकुटजा अपि चन्दनाः स्युः ॥ ८० ॥

## अथ धैर्यप्रशंसा ।

रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ॥
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ८१
क्वचिद्भूमौ शय्या क्वचिदपि च पर्यंकशयनं
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ॥
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८२ ॥
ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ॥
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८३ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ॥
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८४ ॥

( सं० टी० ) किं तेनेति । किं तेन हेमगिरिणा मेरुणा रजताद्रिणा कैलासेन वा यतोऽस्याश्रितास्तरवस्तरव एव भवन्ति न त्वात्मसदृशाः सुवर्णरूप्यरूपाः कृता अतस्ताभ्यां किं प्रयोजनं तस्मान्मलयाद्रिं बहु मन्यामहे यतोऽस्याश्रिताः कंकोलनिम्बकुटजा वृक्षा अपि चंदनाः स्युश्चंदना एव भवंति इति परोपकारः ॥ ८० ॥ ८१ ॥ ८२ ॥ ॥ ८३ ॥ ८४ ॥

( भा० टी० ) इस सोनेके सुमेरुपर्वतसे हमें क्या और चांदीके कैलाससेभी क्या कि, जिसके आश्रित वृक्ष सदा जैसेके तैसेही बने रहे, हम तो मलयाचलकोही श्रेष्ठ मानते हैं कि, जहां कंकोल, नीम और कुटजादि तीते वृक्ष सब चन्दन होजाते हैं ॥ अनमोल रत्न पाकर देवताओंने संतुष्ट हो समुद्रका मथना न छोडा और भयानक विषसेभी भयभीतहोकर अपने उद्योगसे न चूके विना अमृत निकाले विश्राम न लिया इससे यह सिद्ध हुआ कि, धीरलोग अपने निश्चित अर्थको विना सिद्ध किये बीचहीमें छोडके नहीं बैठ रहते ॥ कभी खाली भूमिपर सो रहते,कभी अच्छे पलँगपर शयन करते, कभी साग पात खाके रहजाते, कभी अच्छे चावलआदि पदार्थोंको भोजन करते, कभी गुदडी ओढके दिन बिताते और कभी दिव्यवस्त्र धारण करते हैं, मनस्वी और कार्यार्थी पुरुष सुखदुःख दोनोंको नहीं गिनते ॥ ऐश्वर्यका भूषण सज्जनता, शूरताका वाक्संयम अर्थात् अभिमानके वचन न कहाना,ज्ञानका शांति, शास्त्र पढनेका विनय, धनका पात्रको देना, तपस्याका क्रोध न करना, प्रभुताका क्षमा, धर्मका निश्छलता, अन्य सब गुणोंका भूषण और कारण शील है ॥ नीति जाननेवाले चाहैं निंदा करैं चाह स्तुति और लक्ष्मी चाहै घरमें बहुतसी आवे चाहै चली

जाय; प्राण चाहैं अभी जायँ चाहैं कल्पांत में, परंतु धीरलोग न्यायका मार्ग छोडकर एक पगभी उससे बाहिर नहीं चलते ॥ ८० ॥ ८१ ॥ ॥ ८२ ॥ ८३ ॥ ८४ ॥

भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ॥
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः पश्यत दैवमेव हि नृणां वृद्धौक्षयेकारणम्॥८५॥

पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ॥
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ८६ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ॥
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति ॥ ८७ ॥

छिन्नोऽपि रोहति तरुः क्षीणोप्युपचीयते पुनश्चन्द्रः ॥
इति विमृशंतः सन्तः संतप्यन्ते न विप्लुता लोके॥८८॥

इति धैर्यप्रशंसा ।

## अथ दैवप्रशंसा ॥

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनिग्रहः किल हरेरैरावतो वारणः ॥
इत्यैश्वर्यबलान्वितोऽपि बलिभिर्भग्नः परैः संगरे
तद्व्यक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥ ८९ ॥

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ॥
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ९० ॥

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ॥
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यांत्यापदः॥९१॥
शशिदिवाकरयोर्ग्रहपीडनं गजभुजङ्गमयोरपि बन्धनम्॥
मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः

( सं० टी० ) भग्नाशेति । कश्चित्सर्पो व्यालग्राहिणा धृतः करण्डमध्ये निक्षिप्तस्तस्य स्थितिं वदति—कथं भूतस्य सर्पस्य भग्नाशस्य अहमस्मान्न मोक्ष्यामीति भग्ना आशा यस्य पुनः करण्डपीडिततनोः, पुनः क्षुधया म्लानेन्द्रियस्य एवं जाते सति दैववशात् कश्चिदाखुः तत्रागत्य तत्करण्डस्य विवरं छिद्रं कृत्वा नक्तं रात्रावंतः प्रविष्टः सन्भोगिनो मुखे पतितः पश्चात्तस्याखोः पिशितेन स सर्पस्तृप्तस्तेनैव छिद्रमार्गेण बहिर्यातः । अतो भो जनाः यूयं स्वस्थास्तिष्ठत दैवमदृष्टमेव नृणां वृद्धौ क्षये च कारणमस्ति अदृष्टवशाद्यद्भविष्यति तद्भविष्यति ॥ ८५ ॥ ८६ ॥ ८७ ॥ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

( भा० टी० ) ऐसा सर्प जिसे जीवनकी आशा नहीं पिटारेमें बंदरहनेसे उसका शरीर पीडित है और क्षुधासे उसकी सब इंद्रियां शिथिल होरही हैं मूषक रातको उस पिटारेमें छेद करके आपसे उस सर्पके मुखमें गिरा वह उस मूसेके मांससे तृप्त होकर उसी छेदके रस्ते निकल गया । सो हे लोगो ! देखो कि, ऐसेही मनुष्योंके क्षय और वृद्धिमें दैवही कारण है ॥ हाथोंकी ताडनासे गिरायाभी गेंद ऊपरकोही उछलता है इससे यह प्रगट हुआ कि, साधु आचरणवालोंकी विपत्ति प्रायः स्थिर नहीं होती॥ आलस्य मनुष्योंके शरीरमें महाशत्रु है, उद्योग समान दूसरा बंधु नहीं कि, जिसके करनेसे दुःख नहीं आता ॥ छाटाहुआ वृक्ष फिर बढकर फैल जाता है,

चंद्रमा क्षीण होकर फिर बढकर पूर्ण होजाता है, इससे विचार करनेवाले संत विपत्तिसे संतापको प्राप्त नहीं होते ॥ बृहस्पति ऐसे मंत्री, वज्र ऐसा शस्त्र, देवताओंकी सेना ऐसी सेना, स्वर्ग ऐसा गढ, ऐरावतसा चढनेको हाथी और तिसपर विष्णुका पूर्ण अनुग्रह तोभी ऐसे आश्चर्यकी सामग्रीवाला इंद्र शत्रुओंसे संग्राममें हारताही रहा; इससे यह सिद्ध भया कि, दैवही मुख्यकर शरणके योग्य है पुरुषार्थ वृथा है और उसको धिक्कार है ॥ यद्यपि पुरुषोंको फल कर्मके नुसार होता है और बुद्धि भी कर्मके अनुसार होजाती है तौभी पण्डितोंको विचारहीके काम करना चाहिये ॥ खल्वाट अर्थात् गंजा मस्तकका पुरुष सूर्य्यकी किरणसे जलने लगा तब वह छायाकी वांछा करताहुआ दैवसंयोगसे तालके वृक्षके नीचे जा खडा हुआ तहां जातेही शीघ्र बडा फल ऊपरसे गिरा उसका शिर फूटा तिसका बडा शब्द हुआ इससे यह सिद्ध हुआ कि, अभागा पुरुष जहां जाताहै वहां विपत्तिभी उसके साथ जाती है ॥ चंद्रमा और सूर्यको भी राहुग्रहसे पीडित देखते हैं, हाथी और सर्प इन दोनोंको बन्धनमें देखते हैं और बुद्धिमानोंका दरिद्री देखते हैं इससे हमारे मतमें विधाताही बलवान् दीख पडता है ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥

**सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ॥**
**तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः९३**
**पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं**
**नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ॥**
**धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं**
**यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥९४॥**

( सं० टी० ) सृजतीति । ब्रह्मा तावत्प्रथममशेषगुणाकरं सर्वगुणानामुत्पत्तिस्थलं भुवोऽलंकरणमलंकारमेतादृशं पुरुषरत्नं सृजति तदपि पुरुषरत्नं क्षणभंगि करोति चेद- हह इति खेदे कष्टं यथा स्यात्तथेयं विधेर्ब्रह्मणोऽपंडितताऽज्ञानम् ॥ ९३ ॥ ९४ ॥

( भा० टी० ) पहिले विधाता पुरुषरत्नको सब गुणोंकी खानि और पृथ्वीका भूषण रचता है परंतु उसका शरीर क्षणभंगुर करताहै यह बडे कष्टकी बात है और इसमें विधाता की मूर्खता जान पडती है ॥ करीरवृक्षमें पत्ते नहीं लगते तो इसमें वसंतऋतुका क्या दोष है, घूघूपक्षी दिनमें नहीं देखता तो सूर्यका इसमें क्या दोष है, और जलकी धारा जो चातकपक्षीके मुखमें नहीं पडती तो इसमें मेघका क्या दोष है, इससे यह जाना-जाता है कि विधाताने जो प्रथम ललाटमें लिखदिया है उसे मिटानेको किसका सामर्थ्य है ॥ ९३ ॥ ९४ ॥

इति दैवप्रशंसा ।

# अथ कर्मप्रशंसा ।

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ॥
फलं कर्मायत्तं किममरगणैः किं च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९५ ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ॥
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥९६॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ॥
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९७ ॥

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ॥
सुप्तंप्रमत्तंविषमस्थितंवारक्षन्तिपुण्यानिपुराकृतानि ॥९८॥

( सं० टी० ) नमस्याम इति । देवानिन्द्रादीन्वयं नमस्यामो नमस्कुर्मः तर्हि तेऽपि हतविधेर्वशगा अदृष्टाधीनाः स्वातंत्र्येण फलं दातुमशक्ता अथ विधिर्वन्द्यः सोऽपि प्रतिनियतं यत्कर्म तस्यैकस्य फलं ददाति न त्वन्यफलं दातुं शक्तः फलं तावत्कर्मायत्तं कर्माधीनं यादि चेत्तर्हि अमरैः अदृष्टेन विधिना च किमतस्तत्कर्मभ्यो नमः येभ्यो विधिरपि न प्रभवति ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥

( भा० टी० ) देवताओंको हम नमस्कार करते हैं परन्तु उनको विधाताके वशमें देखते हैं इसलिये विधाताको नमस्कार करते हैं । पर विधाताभी हमारे पूर्व निश्चित कर्मके अनुसार फल देता है फिर जब फल और विधाता दोनों कर्मके आधीन हैं तो देवता और विधातासे क्या काम है? इसकारणसे कर्महीको नमस्कार है क्यों कि, विधाताकाभी सामर्थ्य जिसपर नहीं चलता ॥ जिस कर्मने ब्रह्माको कुम्हारके समान निरंतर ब्रह्मांडरचनाके हेतु बनाया, और विष्णुको वारंवार दश अवतार ग्रहण करनेके संकटमें डाला और रुद्रको कपाल हाथमें लेकर भिक्षा मांगनेके कष्टमें रक्खा और सूर्यको आकाशमें नित्य भ्रमणचक्रमें डाला उस कर्मको प्रणाम है ॥ पुरुषकी सुंदर आकृति कुछ फल नहीं देती और उत्तम कुल, शील, विद्या और बडे यत्नसे की हुई सेवाभी फल नहीं देती एक पूर्वतपस्यासे संचित किये हुये भाग्यही मनुष्योंको समयसमयपर वृक्षके तुल्य फल देते हैं॥वन रण शत्रु जल और अग्निमें समुद्रमें पर्वतके संकटमें सोते हुए असावधान और विषम अवस्थामें पुरुषकी पूर्व जन्ममें कियेहुए पुण्यही रक्षा करते हैं ॥९५–९८॥

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ॥
तामाराधय सत्क्रिया भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः९९

( सं० टी० ) या साधूनिति । या सत्क्रिया खलानपि साधून्करोति मूर्खान् विदुषः करोति द्वेषिणो हितान् करोति परोक्षं प्रत्यक्षं करोति हालाहलम् अमृतं करोति तां सत्क्रियां भगवतीमाराधय यदि वांछितं फलं भोक्तुमिच्छसि हे साधो ! विपुलेषु गुणेषु व्यसनैः प्रीतिभिरास्थां वृथा मा कृथाः सत्क्रियां विना केवलैर्गुणैर्न किंचित्फलम् अथ वा विपरीतमस्मिन्मोहाब्धौ गुणेष्वास्थां वृथा मा कृथाः मा कुरु सत्क्रियां भगवतीमाराधय सत्क्रियां विनास्मिन्युगे फलं न भवति कथंभूतां सत्क्रियां या साधून्खलान् विदुषो मूर्खान् हितान् द्वेषिणोऽमृतं हालाहलं कुरुते ॥ ९९ ॥

भा० टी० ) जो सत्क्रिया खलोंको साधुता देती है और मूर्खोंको पंडितता, शत्रुओंको मित्रता, गुप्तविषयोंको प्रगट और विषको अमृत कर देती है उस सत्क्रियारूपी भगवतीकी आराधना करो हे साधो ! यदि वांछित फल भोगा चाहो तौ कष्ट और हठसे बहुतसे गुणोंके साधनमें वृथा श्रम न करो ॥ ९९ ॥

**गुणवदगुणवद्वा कुर्वता कार्यमादौ**
**परिणतिरवधार्या यत्नतः पण्डितेन ॥**
**अतिरभसकृतानां कर्मणामा विपत्ते-**
**र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १०० ॥**

( सं० टी० ) गुणेति । गुणवद्गुणैर्युतमथ वाऽगुणवत्कार्यं कुर्वता कर्तुमिच्छता पंडितेन विवेकिनादौ पूर्वमेव यत्नतः प्रयत्नात् कार्यस्याकार्यस्य वा परिणतिः परिणामः अवधार्या विचारणीया सर्वं कार्यजातं शुभोदर्कं वीक्ष्यारम्भणीयमिति भावः । अन्यथा अतिरभसेन सहसा कृतानां कर्मणां विपाकः फलम् आ विपत्तेः मरणपर्यंतं हृदयदाही शल्यतुल्यो भवति ॥ १०० ॥

( भा० टी० ) काइ कार्य योग्य हो अथवा अयोग्य हो परन्तु करनेवाले पंडितको उसका परिणाम पहिलेसे विचार लेना चाहिये विना विचारे अतिशीघ्रतासे काम कियेका फल मरणपर्यन्त हृदयको कंटकके समान दाहता है ॥ १०० ॥

**स्थाल्यां वैदूर्यमय्यां पचति च लशुनं चांदनैरिन्धनौघैः**
**सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः ॥**
**छित्त्वा कर्पूरखंडान्वृतिमिह कुरुते कोद्रवाणां समंता-**
**त्प्राप्येमांकर्मभूमिंनचरति मनुजोयस्तपोमंदभाग्यः ॥१॥**

( सं० टी० ) स्थाल्यामिति । मनुजो मनुष्यः इमां कर्मभूमिं प्राप्य यस्तपः स्वधर्मनिष्ठां सत्क्रियां न चरति स मन्दभाग्यः स्वहितं न जानाति । अत्र दृष्टांतः । यथा वैदूर्यमय्यां रत्नखचितायां सुवर्णस्थाल्यां लशुनं चन्दनकाष्ठैः पचति पाकं करोति यथा सुवर्णमयैर्लांगलाग्रैर्हलाग्रैर्वसुधां पृथ्वीं विलिखति भूमिं शुद्धां करोति किमर्थमर्कमूलस्य हेतोरर्कवृक्षाणां रोपणार्थं कर्पूरवृक्षान् छित्त्वा तत्र समंतात् कोद्रवाणां वृतिमावरणं कुरुते तथेमां भूमिं प्राप्य तपस्त्यक्त्वा विषयभोगान् भुंक्ते ॥ १ ॥

( भा० टी० ) वह पुरुष मानो मरकतमणिके बरतनमें लशुनको चन्दनके ईंधनसे पकाता है और खेतमें सोनेका हल चलाकर आँक वृक्षको बोता है और कपूरके टुकडे ढोके काटकर कोदोंके चारों ओर दँडवार बनाता है जो मन्दभागी मनुष्य इस कर्मभूमिमें आके तप नहीं करता ॥ १ ॥

**मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे**
**वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु ॥**
**आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं**
**नाभाव्यंभवतीहकर्मवशतोभाव्यस्यनाशःकुतः ॥२॥**

( सं० टी० ) मज्जत्विति । अम्भसि मज्जतु, मेरुशिखरं यातु, आहवे युद्धे शत्रून् जयतु, वाणिज्यं कृषिसेवनादिसकला विद्याः कलाश्च शिक्षतु अभ्यासं करोतु, विपुलं पुष्कलमाकाशं यातु गच्छतु खगवत् पक्षिवत्, एतादृशं नानाविधं परमुत्कृष्टं प्रयत्नं कृत्वापि इह लोके कर्मवशतो यदभाव्यं तन्न भवति भवितव्यं भवत्येव भाव्यस्य नाशः कुतः प्रयत्नं विनापि भवति ॥ २ ॥

---

१ तिलकणानिति पाठान्तरम् ।

( भा० टी० ) चाहे समुद्रमें डूबो चाहे सुमेरुके शिरपर चढ जावो चाहे घोरसंग्राममें शत्रुओंको जीतो चाहे और वणिज खेती सेवा आदि विद्या और नाना कला करो और आकाशमें पक्षीके समान बडे यत्नसे उडो फिरो पर अनहोनी नहीं होती और जो कर्मवश होनी है सो नहीं टलती २

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः सुजनतामुपयाति तस्य ॥
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ३ ॥

( सं० टी० ) भीमं वनमिति । यस्य नरस्य पूर्वसुकृतं विपुलं पुष्कलं भवति तस्य भीमं वनं प्रधानं श्रेष्ठं पुरं भवति, सर्वो जनो दुर्जनोऽपि सुजनतां याति, कृत्स्ना समग्रा भूः संतः उत्तमा निधयो रत्नानि च तैः पूर्णा भवति ॥ ३ ॥

( भा० टी० ) भयानक वन उस पुरुषके लिये अच्छा नगर हो जाता है और सब जन उसके मित्र होजाते हैं और सम्पूर्ण पृथ्वी उसके निकट रत्नोंसे पूर्ण होती है जिस पुरुषका पूर्व जन्मका बहुतसा पुण्य है ॥ ३ ॥

अथ प्रत्यन्तरे श्लोकाः ।

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ॥
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं
विद्या किं सुखमप्रवासगमनंराज्यंकिमाज्ञाफलम् ॥४॥

मालतीकुसुमस्येव द्वे गती ह मनस्विनः ॥
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ५ ॥

(सं० टी०) क इति । लाभः को गुणिसंगमः असुखं किं प्राज्ञादितरे मूर्खाः तैः सह संगतिः, हानिः का समयच्युतिः, यस्मिन् समये यदवश्यं कर्तव्यमेव तन्न कृतं समयो

गतः सैव हानिः, निपुणता ज्ञातृता का या धर्मतत्त्वे रतिः प्रीतिः, शूरः कः विजितानीन्द्रियाणि येनासौ, प्रियतमा का यानुव्रता, धनं किं विद्या, सुखं किम् अप्रवासगमनम् राज्यं किम् आज्ञाफलं ययाज्ञया सर्वं शुभाशुभं भवति तदेव राज्यम् ॥ ४ ॥ ९ ॥

( भा० टी० ) लाभ क्या है गुणियोंकी संगति, दुःख क्या मूर्खोंका संग, हानि क्या समयपर चूकना, निपुणता क्या धर्ममें रति होना, शूर कौन है जिसने इंद्रियोंको वशमें किया, स्त्री कौन अच्छी है जो अनुकूल हो, धन क्या है विद्या, सुख क्या है प्रवास न होना, राज्य क्या है अपनी आज्ञाका चलना ॥ मालतीके फूलोंके समान मनस्वी ( धीर ) पुरुषकी दो वृत्ति होती हैं या तो सब लोगोंके मस्तकपर रहे अथवा वनमें ही नष्ट होजाय ॥ ४ ॥ ९ ॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ॥
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मंडिता वसुधा ॥ ६ ॥

( सं० टी० ) अप्रियेति । अप्रियवचनदरिद्रैः अप्रियवचनेषु दरिद्रास्तैः प्रियवचनेषु आढ्याः संपन्नास्तैः स्वदारेषु परितुष्टैः परापवादात्परनिंदाया निवृत्ता एवमादिभिर्गुणैर्युक्तैः पुरुषैः क्वचित्क्वचित्स्थले वसुधा मंडिता शोभायमाना ॥ ६ ॥

( भा० टी० ) अप्रियवचनके तो दरिद्र प्रियवचनोंसे संपन्न अपनीही स्त्रीसे संतुष्ट और पराई निंदासे रहित जो पुरुष हैं उनसे कहीं कहीं ही पृथ्वी शोभायमान है अर्थात् ऐसे पुरुष सब ठौर नहीं होते ॥ ६ ॥

कदर्थितस्यापि हि धैर्यवृत्ते-
र्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ॥
अधोमुखस्यापि कृतस्य वह्ने-
र्नाधः शिखा याति कदाचिदेव ॥ ७ ॥
कान्ताकटाक्षविशिखा न दहन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ॥

कर्षन्ति भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ ८ ॥
एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ॥
क्रियते भास्करेणेव परिस्फुरिततेजसा ॥ ९ ॥
वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ॥
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ १०॥

( सं० टी० ) कदर्थितेति । कदर्थितस्य कष्टं प्राप्तस्य धैर्यं वृत्तिर्वर्तनं यस्य तस्य धैर्यगुणः प्रमार्ष्टुं नाशं प्रापयितुं केनापि न शक्यते । अत्र दृष्टान्तः । अधःकृतमुखस्य वह्नेः शिखा कदाचिदप्यधो न याति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

( भा० टी० ) क्लेशित जन यदि धैर्यवृत्तिवाला होय तो कोई उसकी धैर्यवृत्तिको नहीं मिटा सक्ता; जैसे प्रज्वलित अग्निको उलट दे तोभी ज्वाला उपरहीको रहती है नीचे नहीं जाती ॥ स्त्रियोंके कटाक्षरूपी बाण जिसके चित्तको नहीं वेधते और क्रोधरूपी अग्निकी आंच जिसके चित्तको नहीं जलाती और इंद्रियोंके विषय लोभ फांसीमें डालकर जिसके चित्तको नहीं खींचते वही धीर पुरुष तीनों लोकको जीतता है ॥ एकही अकेला शूर सारी पृथ्वीको पांव तले दबाकर वशकर लेताहै जैसे अकेला तेजस्वी सूर्य्य सारे जगत्को प्रकाशित करता है ॥ अग्नि उस पुरुषको जलके समान जानपडता है और समुद्र स्वल्प नदीसा उसको तत्काल दीखपडता है, मेरुपर्वत स्वल्प शिलाके तुल्य बूझपडता है, सिंह शीघ्रही उसके आगे हिरन बनजाता है, सर्प उसके हेतु फूलकी मालासा बनजाता है और विष-रस उस पुरुषको अमृतकी वृष्टिके समान हो जाता है जिस पुरुषके अंगमें समस्त जगत्का मोहनेवाला शील प्रकाशमान है ॥ ७ ॥ ८ ॥ ९॥१०॥

लज्जागुणौघजननीं जननीमिव स्वा-
मत्यन्तशुद्धहृदयामनुवर्तमानाम् ॥
तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १११ ॥

इति श्रीभर्तृहरिकृतं नीतिशतकम् ॥

( सं० टी० ) लज्जेति । सत्यमेव व्रतं तदेव व्यसनं येषां ते प्रतिज्ञां न त्यजन्ति पुनरन्यां न कुर्वन्ति कथंभूतां प्रतिज्ञां लज्जायाः ये गुणास्तेषामोघः समुदायस्तस्य जननीम् । पुनः कथंभूतां स्वां स्वकीयां जननीमिव अत्यन्तशुद्धहृदयामनुवर्तमानाम् अतस्तेजस्विनः सुखमसून्प्राणानपि त्यजन्ति ॥ १११ ॥

( भा० टी० ) लज्जादि गुणोंके समूहको उत्पन्न करनेवाली और अपनी माताके समान शुद्धहृदय और स्वाधीन रहनेवाली प्रतिज्ञाको तेजस्वी और सत्यव्रतके धारण करनेवाले पुरुष नहीं छोडते परन्तु अपना प्राणभी सुखसे त्याग करदेते हैं ॥ १११ ॥

इति भर्तृहरिकृतनीतिशतकस्य भाषाटीका संपूर्णा ॥



# अथ भर्तृहरिविरचितं

## शृंगारशतकं प्रारभ्यते ।



शम्भुस्वयंभुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकर्मदासाः ॥
वाचामगोचरचरित्रविचित्रिताय
तस्मै नमो भगवते कुसुमायुधाय ॥ १ ॥

( सं० टी० ) इदानीं शृंगारशतकं व्याख्यायते ॥ सम्यग्विचारितं चेत् परिणामे वैराग्यमेवास्ति निंदास्तुतिः स्तुतिर्निन्दा वा द्विःप्रकारोऽस्ति अत्र तावत् स्तुतिनिन्दाप्रकारः स्त्रीणां शृंगारश्च नश्वरः एतयोः सकाशात् सुखं तन्नश्वरं परिणामे दुःखमेव एवं सति विषयिभिरविचार्य बहुतरं स्तूयते सा स्तुतिरादौ तां विलिखति । शंभुरिति । शंभुः शिवः स्वयंभूः ब्रह्मा हरिर्विष्णुरेते महान्तः ईश्वरा येन मदनेन सततं निरन्तरं गृहकर्मदासाः कृतास्तस्मै कुसुमायुधाय नमोऽस्तु वाचामगोचराणि चरित्राणि तैर्विचित्रिताय नानाप्रकाराय ॥ १ ॥

( भा० टी० ) जिसने शिव ब्रह्मा और विष्णुकोभी स्त्रियोंके कार्य करनेके लिये दास बना रक्खा है और विचित्र चतुर जिसका वर्णन नहीं हो सकता ऐसे पुष्पायुध कामदेवको नमस्कार है ॥ १ ॥

स्मितेन भावेन च लज्जया भिया
पराङ्मुखैरर्द्धकटाक्षवीक्षणैः ॥
वचोभिरीर्ष्याकलहेन लीलया
समस्तभावैः खलु बन्धनं स्त्रियः ॥ २ ॥

( सं० टी० ) तत्रादौ स्त्रीप्रशंसा । स्मितेनेति । स्मितेन हास्येन भावेन चित्ताभिप्रायेण लज्जया भिया भयेन पराङ्मुखैरर्द्धानि कटाक्षेण वीक्षितानि नेत्रालोकनानि तैः वचोभिः परोत्कर्षासहिष्णुतेर्ष्या तयेर्ष्यया कलहेन लीलयेति समस्तभावैः खलु निश्चयेन स्त्रियो बन्धनं भवन्ति ॥ २ ॥

( भा० टी० ) मंद मुसुकाना, लज्जित होना, मुख फेरलेना अर्धकटाक्षसे देखना, मधुरवचनसे बोलना, ईर्ष्यासे कलह करना और अनेक चरित्र दिखाना इन सब प्रकारोंसे स्त्री बंधनरूपही हैं ॥ २ ॥

भ्रूचातुर्याकुञ्चिताक्षाः कटाक्षाः
स्निग्धा वाचो लज्जिताश्चैव हासाः ॥
लीलामन्दं च स्थितं प्रस्थितं च
स्त्रीणामेतद्भूषणं चायुधं च ॥ ३ ॥

( सं० टी० ) भ्रूचातुर्येति । भ्रुवोर्यच्चातुर्यं तेनाकुंचितान्यक्षीणि नेत्राणि येषु एवंभूताः कटाक्षाः, स्निग्धाः स्नेहयुक्ता वाचः, लज्जिता लज्जायुक्ता हासाः,लीलया स्वभावेन मंदं शनैः प्रास्थितं प्रयाणं स्थितं च स्त्रीणामेते पदार्था भूषणमायुधं च भवन्ति॥३॥

( भा० टी० ) भौंह फेरनेकी चतुराई, अर्द्धनेत्रसे कटाक्ष चलाना मीठीं बातें बोलना, लज्जित हो हँसना, लीलासे मंद मंद चलना, और घूमते खडे होजाना स्त्रियोंके यह सहज गुण और शस्त्र अर्थात् इन्हीं भावोंसे पुरुषोंको मारती हैं ॥ ३ ॥

क्वचित्सुभ्रूभंगैः क्वचिदपि च लज्जापरिणतैः
क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः ॥
नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः
स्फुरन्नीलाब्जानां प्रकरपरिपूर्णा इव दृशः ॥४ ॥

( सं० टी० ) क्वचिदिति । प्रथमसंगतानां नवोढानां वदनान्येव कमलानि तैः, नेत्रचलितैः नेत्राणि चलितानि चञ्चलानि येषु तैः, स्फुरन्नीलाब्जानां प्रकरः समुदा-

यस्तेन परिपूर्णा इव दृष्टयो भवन्ति । वदनानि कमलानीव तेषु नेत्रचलितानि तान्येव भ्रमरास्तैः पूर्णानि दृश्यन्ते कथंभूतैर्वदनैः क्वचित् सुभ्रूभंगैर्भ्रूभङ्गाश्चलनानि येषु तैः क्वचिल्लज्जया विलसितैः शोभितैः ॥ ४ ॥

( भा० टी० ) किसी समय सुन्दर भौंहसे कटाक्ष करता, कभी लज्जासे शोभायमान दिखाई पडता, कभी भयसे भीत होता और कभी लीलाहीसे विलासोंको धारण करता है इसभांति नेत्रोंसे शोभित नवीन स्त्रियोंका जो मुखकमल है उससे दृष्टि ऐसी व्याप्त हो रहीहै जैसे नीलकमलके समूहसे ॥ ४ ॥

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानाञ्चयः ॥
वक्षोजाविभकुम्भसंभ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मंडनम् ॥५॥

( सं० टी० ) वक्रमिति । वक्त्रं चन्द्रविकासि चन्द्रवद्वर्तुलं शोभायमानं च, पंकजानां परीहासः विकसनं तत्क्षमे लोचने, वर्णः कान्तिः स्वर्णं सुवर्णमपाकरिष्णुः सुवर्णतोऽधिकः, कचानां केशानां चयः समुदायोऽलिनीं भ्रमरीं जिष्णुः, वक्षोजौ स्तनौ इभस्य गजस्य कुम्भो गंडस्थलं तस्य संभ्रमः शोभा तस्य हरौ कठिनौ गुर्वी पृथुला नितम्बस्थली पश्चात्कटिप्रदेशः, मार्दवम् वाचां वचनानां हारि अत्यन्तकोमलानि वचनानि, एतत्सर्वं युवतिषु स्वाभाविकं स्वभावेनैव मण्डनं भवति ॥ ५ ॥

( भा० टी० ) चन्द्रमाको फीका करनेवाला मुख, कमलको हंसनेवाले नेत्र, सुवर्णकी दमकको मन्द करनेवाली देहकी कांति भौंरोंके पुंजको जीतनेवाले केश, गजमस्तककी शोभा हरनेवाले स्तन और विशाल भारी दोनों नितंब और मन हरनेवाली कोमलवाणी ये सब स्त्रियोंमें स्वाभाविक भूषण हैं ॥ ५ ॥

स्मितं किञ्चिद्वक्त्रे सरलतरलो दृष्टिविभवः
परिष्यन्दो वाचामभिनवविलासोक्तिसरसः ॥

गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशंत्यास्तारुण्यं किमिह न हि रम्यं मृगदृशः॥६॥

( सं० टी० ) स्मितमिति । तारुण्यं स्पृशन्त्या मृगदृशः किमपि किञ्चिदपि इह रम्यं न हि अपि तु सर्वं रम्यमेवास्ति, तत्किं वक्रे किञ्चित्स्मितमल्पं हास्यं, सरलस्तरलश्चंचलो दृशोर्विभवः सामर्थ्यं विलासेन दर्शनशक्तिः अभिनवा विलासोक्तिस्तया सरसः मधुरः वाचां वचनानां परिष्यन्दः वक्तव्यता, गतीनां गमनानामारम्भः किसलयितलीलापरि-करः किसलया नवपल्लवा अत्यन्तमृदवस्तद्वन्मृदु शनैर्मृदुगमनमित्यर्थः ॥ ६ ॥

( भा० टी० ) मंद मुसकुराताहुआ मुख, सीधे और चंचल दृष्टिपात करना, नये नये विलास उक्तिसे सरस बात करना, लीलासे कमलके समान मंद मंद गतिसे गमनका आरंभ करना युवा अवस्था चढतेही क्या क्या सुन्दर हाव भाव स्त्रियोंमें नहीं उत्पन्न होते ॥ ६ ॥

द्रष्टव्येषु किमुत्तमं मृगदृशां प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः॥
किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तत्तनु-
र्ध्येयं किं नवयौवनं सुहृदयैः सर्वत्र तद्विभ्रमः ॥ ७॥

( सं० टी० ) द्रष्टव्येष्विति । सुहृदयैरासक्तचित्तैः द्रष्टव्येषु किमुत्तमं द्रष्टव्यं मृगदृशां प्रेम्णा प्रीत्या प्रसन्नं मुखं, घ्रातव्येषु किमुत्तमं तदास्यपवनः, श्राव्येषु किमुत्तमं तद्वचः, स्वाद्येषु किं तस्या ओष्ठपल्लवस्य रसः, स्पृश्येषु किं तस्यास्तनुः, ध्येयं किं तस्या नवयौवनं, सर्वत्र सर्वदा विभ्रमो विलासः स्मरणीयः ॥ ७ ॥

( भा० टी० ) रसिकोंके देखने योग्य वस्तुओंमें उत्तम वस्तु क्या है मृगनयनी नायिकोंका प्रेमसे प्रसन्नवदन, सूँघनेकी वस्तुमें उनके मुखकी भाफ, सुननेमें मधुरवाणी, स्वादिक वस्तुमें उनके अधरपल्लवका रस, स्पर्शकी वस्तुमें उनका शरीर और ध्यान करनेके योग्य उनका यौवन और विलास है ॥ ७ ॥

एताः स्खलद्वलयसंहतिमेखलोत्थ-
झङ्कारनूपुररवाहृतराजहंस्यः ॥
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ ८ ॥

( सं० टी० ) एता इति । एतास्तरुण्यः कटाक्षैः कस्य मनो विवशं स्वाधीनं न कुर्वन्ति अपि तु सर्वस्य कुर्वन्त्येव । कथंभूताः । स्खलंति शब्दायमानानि वलयानि मेखलाश्च तेषां संहतिस्तत उत्थितो झङ्कारो झणत्कारस्तेन सहितानि तादृशानि नूपुराणि तेषां स्वाच्छब्दादाहृता जिता राजहंसानां स्त्रियो याभिस्ताः, कथंभूतैः कटाक्षैः । वित्रस्ता भयभीता मुग्धा हरिण्यस्तासां यथा प्रेक्षणानि तत्सदृशैः ॥ ८ ॥

( भा० टी० ) ऐसी स्त्रियां जिनके चंचल कंकणोंके शब्द क्षुद्रघंटिका ( कोंदनी ) की ध्वनि और नूपुरके झनकारने राजहंसिनियोंकी चाल जीत ली है वे तरुणी भडकी हरिणीके समान नेत्रपात कर किसके मनको विवश नहीं करतीं ॥ ८ ॥

कुंकुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ॥
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ ९ ॥

( सं० टी० ) कुंकुमेति । कुंकुमस्य पंकः कर्दमस्तेन कलंकितो देहो यस्याः सा, गौरौ पयोधरौ स्तनौ ताभ्यां कंपितो हारो यस्याः सा, नूपुराण्येव हंसास्ते रणंति शब्दायमानाः पदपद्मायोः यस्याः सा, एवंभूता रामा स्त्री भुवि कं पुरुषं न वशीकुरुते अपि तु सर्वानपि ॥ ९ ॥

( भा० टी० ) केशर और चंदनसे जिसका देह शोभित है गोरे स्तनों पर हार झूमता है और चरणकमलमें हंससे नूपुर बोलते हैं ऐसी सुंदरस्त्री इस पृथ्वीपर किस पुरुषका मन नहीं मोह लेती ॥ ९ ॥

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीनाम् ॥

याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥ १० ॥
नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ॥
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ ११ ॥

( सं० टी० ) नूनमिति । ते कविवराः तत्त्वविचारश्रेष्ठाः नूनं निश्चयेन विपरीत-बोधाः विपरीतज्ञातारः ये कामिनीनामबला इति नित्यमाहुः वदंति । याभिः कामिनी-भिरतिशयेन विलोलतरास्तारका येषामेवंभूतैर्दृष्टिपातैः प्रेक्षणैः शक्रादयोऽपि जिताः तु इति निश्चयेन कथं ता अबलाः प्रोक्ताः ॥ १० ॥ ११ ॥

( भा० टी० ) वे श्रेष्ठ कवि निश्चित उलटी समुझवाले हैं जिन्होंने स्त्रियोंका नाम अबला रक्खा है । जिनकी चंचल पुतलियोंके कटाक्षसे इन्द्रादिकभी हार मानते हैं भला कहो तो वे अबला कैसे हैं ॥ कामदेव निश्चय करके स्त्रियोंका आज्ञाकारी सेवक है; क्योंकि जिसे वह आखोंसे सैनकर देती हैं उसी पुरुषको वह दबालेता है ॥ १० ॥ ११ ॥

केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ॥
मुक्तानां सतताधिवासरुचिरं वक्षोजकुम्भद्वय-
मित्थं तन्वि वपुः प्रशांतमपि ते क्षोभं करोत्येव नः॥१२॥
मुग्धे धानुष्कता केयमपूर्वा त्वयि दृश्यते ॥
यथा हरसि चेतांसि गुणैरेव न सायकैः ॥ १३ ॥
सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु ॥
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ १४ ॥

( सं० टी० ) केशा इति । केशाः संयमिन आवृत्ता बद्धाः, लोचने श्रुतेः कर्ण-स्यापि परं पारं प्रांतं गते, स्वभावेनैव शुचिभिः शुद्धैर्द्विजानां दंतानां गणैरन्तर्वक्त्रं कीर्णं

व्याप्तं, मुक्ताफलानां सततमधिवासो वसतिस्तया रुचिरं शोभायमानं वक्षोजौ स्तनौ तावेव कुंभौ तयोर्द्वयं, हे तन्वि ! इत्थमुक्तप्रकारेण ते तव वपुः प्रशांतमपि नोऽस्माकं क्षोभं करोत्येव ॥ १२ ॥ १३ ॥ १४ ॥

( भा० टी० ) केश संयमी हैं अर्थात् सुगंधित तेलयुत कंघीसे संवारे नेत्र दोनों श्रुतिके पार होगए हैं अर्थात् कानोंतक अत्यन्त विशाल हैं, मुख अन्तरमें सहजही शुचि अर्थात् विमल द्विजोंके समूहसे भरा अर्थात् दातोंकी पङ्क्तिके किरणसे चमकता, और दोनों स्तनकलश मुक्ताका वास निरंतर अर्थात् मोतियोंकी मालासे शोभित हैं हे स्त्री सूक्ष्मांगि ! तेरा शरीर शांतस्वरूपभी है अर्थात् संयमी नियमी श्रुति वेदका पारगामी शुचि पवित्र द्विज ब्राह्मण और मुक्त विरक्त पुरुष इनसे युक्त है, पर मुझे तो अनुरागही उत्पन्न करता है ॥ हे सुंदरि ! तेरी यह धनुषविद्यामें कुशलता विचित्र देख पडती है जो चित्तको गुण अर्थात् प्रत्यंचा वा चतुराईहीसे बींधतीहै बाणसे नहीं ॥ दीपक अग्नि तारे सूर्य और चंद्रमा ये सब हैं परन्तु एक मृगनयनी स्त्री विना मुझे सब जग अंधेरा है ॥ १२ ॥ १३ ॥ १४ ॥

यद्वृत्तः[1] स्तनभार एष तरले नेत्रे चले भ्रूलते
रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ॥
सौभाग्याक्षरपङ्क्तिरेव[2] लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावली केन सा॥१५॥
गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ॥
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १६ ॥

( सं० टी० ) यदिति । हे कामिनि यद्यस्मात् कारणात् तव एष वृत्तः वर्त्तुलः स्तनभारः तरले चंचले नेत्रे चले चंचले शुभे भ्रूलते इदमोष्ठपल्लवमेतानि सर्वाणि अस्मासु नाम इति निश्चयेन राग इच्छा तयान्धेषु व्यथां कुर्वन्ति तत्कुर्वन्तु कुतः पुष्पायुधेन मदनेन स्वयं तत्र भाले सौभाग्याक्षरपंक्तिरेव लिखिता वर्तते अतोऽस्माकं किमपि

१ उद्वृत्तः । २ पंक्तिकेव ।

न चलति परन्तु इयं तवोदरे रोमावली मध्यस्थापि तापं करोति तत्केन कारणेन तन्न ज्ञायते ॥ १५ ॥ १६ ॥

( भा० टी० ) उन्नत स्तनके भार चंचल नेत्र और भ्रूलता और राग भरे नवीन पत्तोंसे दोनों अधरपल्लव ए रागसे अंधे रसिकोंके शरीरमें पीडा करें तो करें क्योंकि कामदेवके हाथकी लिखी तेरे मस्तकमें सौभाग्यके अक्षरोंकी पंक्ति है परंतु मध्यस्थ रोमावली क्यों अधिक ताप देती है तात्पर्य यह कि, उन्नत, चंचल रागवान् प्रायः पीडा देता ही है परन्तु मध्यस्थ जिसका काम छुडा देनेका है वह रोमावली क्यों अधिक पीडा देती है अर्थात् विपरीत करती है ॥ स्तनोंके भारसे गुरु प्रकाशमान मुखसे चंद्र और दोनों चरणसे मंदगामी ग्रहमयसी वह स्त्री शोभा देती है अर्थात् गुरु बृहस्पति मंदगामी शनि चंद्र प्रसिद्धही हैं इन ग्रहोंका नामभी प्रकाशित है ॥ १५ ॥ १६ ॥

तस्याः स्तनौ यदि घनौ जघनं विहारि
वक्त्रं च चारु तव चित्त किमाकुलत्वम् ॥
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १७ ॥

( सं० टी० ) तस्या इति । हे चित्त ! तस्याः स्तनौ घनौ कठिनौ तथा च जघनं विहारि क्रीडायोग्यं तथा च वक्त्रं चारु सुन्दरं यदि तर्हि तव व्याकुलत्वं किमर्थं यदि तव वाञ्छास्ति तर्हि पुण्यं कुरुष्व समीहितार्था अभीप्सितार्थाः पुण्यैर्विना न भवन्ति ॥ १७ ॥

( भा० टी० ) जिस स्त्रीके स्तन पुष्ट और जघन विहार करने योग्य हैं और मुख सुंदर है तौ उन्हें देखकर हे चित्त क्यों व्याकुल होता है यदि उनमें तेरी वांछा होय तो पुण्य कर क्योंकि, पुण्यविना मनोरथ सिद्ध नहीं होते ॥ १७ ॥

मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्यादमिदं वदन्तु ॥

सेव्या नितम्बाः किमु भूधराणा-
मुत स्मरस्मेरविलासिनीनाम् ॥ १८ ॥

( सं० टी० ) मात्सर्यमिति । भो आर्याः मात्सर्यमुत्सार्य त्यक्त्वा विचार्य च इदं समर्यादं कार्यं वदन्तु तर्कि यदि परमार्थं चेत्तर्हि भूधराणां नितम्बाः सेव्याः नो चेत्स्मरस्य मदनस्य स्मेरो भरस्तेन विलासनीनां नितम्बाः सेव्या इति ॥ १८ ॥

( भा० टी० ) हे पंडितो ! मत्सरता त्याग और मर्यादा सहित विचार कर कहो कि तो पर्वतहीके नितंब सेवने योग्य हैं कि, कामदेवकी उमंगसे मुसुकती विलासनी स्त्रियोंके नितंबही सेवने योग्य हैं नितंब पर्वतके मध्य-भाग और स्त्रियोंके कटीके पश्चात् भागको कहते हैं ॥ १८ ॥

संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां
तत्त्वज्ञानामृताम्भःकृतललितधियां यातु कालः कदा
चित् ॥ नो चेन्मुग्धाङ्गनानां स्तनजघनभराभोगसं-
भोगिनीनां स्थूलोपस्थस्थलीषु स्थगितकरतलस्प-
र्शलीलोद्यतानाम् ॥ १९ ॥

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ॥
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ २० ॥

संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ॥
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ २१ ॥

( सं० टी० ) संसारे इति । अस्मिन्संसारे पण्डितानां द्वे गती स्तः अतस्तत्त्वज्ञाने नैवामृतोदकेन प्लुता तीक्ष्णा धीर्येषामेवंभूतः कालः कदाचिद्यातु गच्छतु इयमेका गतिः; नो चेत्तर्हि स्तनजघनयोर्भरस्तस्मिन् भोगः संभोगो यासां तासां मुग्धाङ्गनानां

स्थूलोपस्थस्थलीषु भूमिषु स्थगितः करतलस्पर्शसैव लीलातत्रोद्यतानां तासां संगेन कालो यात्वियं गतिर्द्वितीया ॥ १९ ॥ २० ॥ २१ ॥

( भा० टी० ) यह असार संसार जिसकी अंत अवस्था अति चंचल है उसमें पंडितोंके हेतु दोही सुलभ गति हैं एक तो तत्त्वज्ञानरूपी अमृतरसमें स्नानकरनेवाली जिनकी निर्मल बुद्धिहै उनका काल अच्छा व्यतीत होताहै अथवा सुंदर कामिनीके पुष्टस्तन और जघनसे भोगमें सुखदाई जो स्त्री उनके शरीरपर हाथ दिये लीलासे उद्योगमें जो तत्पर हैं उनका कालभली-भाँति व्यतीत होता है ॥ चंद्रकांत मुख, महानील केश और दोनों पद्मराग हाथोंसे ऐसी रत्नमय वह स्त्री शोभा देती है अर्थात् चंद्रकान्त, महानील, पद्मराग तीन प्रकारकी मणिरूप स्त्री शोभित होती है ॥ मोह लेती, मत्तकर देती विडंबना करती, डांट झिडकन देती, रमण कराती और विरहका विषाद देती है ऐसी स्त्रियां मनुष्यके सदय हृदयमें प्रवेशकरके क्या नहीं करतीं हैं ॥ १९ ॥ २० ॥ २१ ॥

**विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी**
**विचचार काचित् ॥ स्तनोत्तरीयेण करोद्धृतेन**
**निवारयन्ती शशिनो मयूखान् ॥ २२ ॥**

( सं० टी० ) अथ भोगादिलक्षणमुच्यते । विश्रम्येति । काचित्तन्वी विरहिणी वनद्रुमाणां छायासु विश्रम्य विश्रम्य विचचार स्तनोत्तरीयेण स्तनोपरिवस्त्रेण करोद्धृतेन शशिनः चंद्रस्य मयूखान्किरणान्निवारयन्तीव ॥ २२ ॥

( भा० टी० ) वनके वृक्षोंकी छायामें विश्राम लेती २ कोई एक स्त्री हाथसे अपने स्तनोंके आँचलो उठाये चंद्रमाकी किरणोंको रोकती हुई जाती है । यहां कृष्णाभिसारिका नायिका जानो ॥ २२ ॥

**अदर्शने दर्शनमात्रकामा दृष्ट्वा परिष्वङ्ग-**
**रसैकलोलाः ॥ आलिङ्गितायां पुनरायता-**
**क्ष्यामाशास्महे विग्रहयोरभेदम् ॥ २३ ॥**

( सं० टी० ) अदर्शने इति । आयताक्ष्याः प्रिययुवत्या अदर्शने दृष्टिगोचरत्वाभावे दर्शनमेव दर्शनमात्रं तस्मिन् कामो लालसा येषां तथाभूताः वयं स्म इति । शेषः अस्तिर्भवंतींपरोऽप्यप्रयुज्यमानोप्यस्तीतिभाष्यात् । तां दृष्ट्वा परिष्वङ्गरसे आलिङ्गनरसे एकस्मिन्नेव लोलाः सतृष्णाः आयताक्ष्यां पुना रतिसमय आलिङ्गितायां सत्याम् उभयोर्विग्रहयोर्देहयोरभेदं सान्तत्येनैकत्र स्थितिमाशास्महे इच्छामः । अभिलषितविषयप्राप्तावपि विषयेच्छा न निवर्त्तत एवेति भावः ॥ २३ ॥

( भा० टी० ) जबतक हम स्त्रीको नहीं देखते तबतक तो देखनेहीकी इच्छा रहती है, देखते हैं तब उससे आलिंगनरसका सुख चाहते हैं और लिपटनेपर यह अभिलाषा रखते हैं कि, यह मृगनयनी हमारे शरीरसे विलग न हो ॥ २३ ॥

मालती शिरसि जृम्भणोन्मुखी चन्दनं
वपुषि कुंकुमान्वितम् ॥ वक्षसि प्रियतमा
मनोहरा स्वर्ग एष परिशिष्ट आगतः ॥ २४ ॥

( सं० टी० ) मालतीपुष्पमाला शिरसि वर्त्तते कीदृशी जृम्भणोन्मुखी विकसन्मुखी विकसिता तथा विपुषि चन्दनं कुंकुमेन युक्तं तथा च वक्षसि हृदये प्रियतमा मनोहरा वर्त्तते तस्य स्वर्गोऽवशिष्ट उर्वरितः एषोत्र आगतः अत्रापि स्वर्गभोगो भवति ॥ २४ ॥

( भा० टी० ) शीघ्र खिलनेवाली मालतीकी कलियोंकी माला माथेमें पहिनेहों, केशरयुक्त चन्दन अंगमें लगाये हों और सुन्दर प्यारी स्त्रियोंको छातीसे लिपटाये हों तो यह जानो कि, शेष स्वर्गका भोग यहाँ प्राप्त हुआ है ॥ २४ ॥

प्राङ् मामेति मनागमानितगुणं जाताभिलाषं ततः
सव्रीडं तदनु श्लथोद्यतमनुप्रत्यस्तधैर्यं पुनः ॥
प्रेमार्द्रस्पृहणीयनिर्भररहःक्रीडाप्रगल्भा ततो
निःशंकाङ्गविकर्षणादिकसुखं रम्यं कुलस्त्रीरतम् ॥ २५ ॥

उरसि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किंचिदुन्मीलितानाम् ॥
सुरतजनितखेदस्विन्नगण्डस्थलीना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ २६ ॥

(सं०टी०) प्राङ् मामेति । कुलस्त्रीरतं रम्यं कथं प्राक् पूर्वं मामा इति मनागेकवारम् अमानितगुणं स्वयमेव आगमिष्यति इति कारणात् आदरो नैव कृतः ततः जाताभिलाषं इच्छा जाता ततः सव्रीडं लज्जया सह आगता तदनु श्लथायतं शिथिलतया उद्यता अनु पश्चात्प्रत्यस्तधैर्यं त्यक्तधैर्यं पुनः प्रेम्णा आर्द्रः स्पृहणीयः निर्भर आदरः तेन रहः एकान्ते क्रीडायां प्रगल्भा त्यक्तलज्जा ततः निःशंकमंगविकर्षणेन अधिकं सुखम् । एवं शनैः शनैः त्यक्तलज्जामिति कारणात् रम्यम् ॥ २५ ॥ २६ ॥

( भा० टी० ) पहिले तो नहीं करना यह मनोहर गुण उसमें है फिर अभिलाषा उत्पन्न होना और लज्जासे शरीरको ढील देना, धैर्य्य छोडना प्रेमरसमेंभी विशेष सराहनेयोग्य एकान्त क्रीडाका चातुर्य्य विस्तार करना, फिर निडर हो अङ्ग खैंचनेका अधिक सुखलाभ करना इससे निश्चय जानो कि, कुलस्त्रीहीकी रति अच्छी होती है ॥ छातीपर लेटी हुई हैं और सुगंधित केश उनके बिखरे हुए हैं, आधे नेत्र मूँदे हुए हैं कुछ कुछ हिल रही है मैथुनके श्रमसे उनके गालोंपर पसीने झलक रहे हैं ऐसी स्त्रियोंके अधरमधुको भाग्यवान् ही पुरुष पान करते हैं ॥ २५ ॥ २६ ॥

आमीलितनयनानां यः सुरतरसोऽनुसंविदं कुरुते ॥
मिथुनैर्मिथोवधारितमवितथमिदमेव कामनिर्वहणम् २७

( सं०टी० ) आमीलितेति । आ ईषन्मीलितनयनानां स्त्रीणां यः सुरतरसः अनुसंविदं सुखं कुरुते इदमेव कामस्य निर्वहणं कर्तव्यं मिथुनैर्द्वंद्वैर्मिथः परस्परमवधारितं ज्ञातमन्योऽन्यं जानाति ॥ २७ ॥

( भा० टी० ) आलस्य भरी नेत्रवाली स्त्रियोंको कामसे तृप्ति करना यही स्त्री पुरुष दोनोंका परस्पर कामपूजन है ॥ २७ ॥

इदमनुचितमक्रमश्च पुंसां
यदिह जरास्वपि मान्मथा विकाराः ॥
तदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥ २८ ॥

एतत्कामफलं लोके यद्द्वयोरेकचित्तता ॥
अन्यचित्तकृते कामे शवयोरिव सङ्गमः ॥ २९ ॥

( सं० टी० ) इदमिति । पुंसां यत् यस्मात् जरास्वपि मान्मथाः मदनस्य विकाराः कृता इदमनुचितं कृतमक्रमश्च क्रमोऽपि नैव तदा तथा च नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा न कृतम् इदमपि अनुचितं कृतम् ॥ २८ ॥ २९ ॥

( भा० टी० ) यह विधाताने पुरुषोंमें बडी अनुचित और उलटी बात उत्पन्न की है कि, बुढापेमेंभी कामका विकार प्रगट होता है ऐसाही स्त्रियोंकाभी नहीं किया कि, जबलों स्तन न गिरें तभीलों जियें और कामचेष्टा रक्खें ॥ स्त्री और पुरुषके समागमें एकचित्त होजाना कामदेवका यही मुख्य फल है । यदि काममें दोनोंका चित्त और ठौर रहा तो मृतकोंकासा संगम होता है ॥ २८ ॥ २९ ॥

प्रणयमधुराः प्रेमोद्गाढा रसादलसास्तथा
भणितिमधुरा मुग्धप्रायाः प्रकाशितसंमदाः ॥
प्रकृतिसुभगा विश्रम्भार्हाः स्मरोदयदायिनो
रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ ३० ॥

आवासः क्रियतां गाङ्गे पापहारिणि वारिणि ॥
स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ३१ ॥

( सं० टी० ) प्रणयेति । मृगीदृशां रहसि स्वैरं यथेष्टमालापा वचनानि किमपि अनिर्वचनीयं सुखं कुर्वन्ति । कथंभूता आलापाः । प्रणयेन प्रीत्या मधुराः प्रेम्णा

उद्गाढाः, अतिशयरसादलसाः तथा भणितौ रतिकूजिते मधुराः मुग्धप्रायाः अस्फुटाः अप्रकाशिताः प्रकर्षेण मदा यैस्ते प्रकाशितसंमदाः, प्रकृत्या स्वभावेन सुभगाः सुन्दराः विश्रंभार्हाः विश्वासयोग्याः स्मरस्य उदयं ददतीति ते स्मरोदयदायिनः ॥३०॥३१॥

( भा० टी० ) सुशीलतासे मीठे, प्रेमरसकी पूर्णतासे ढीले, स्वरसे सुखदाई सुननेमें सुंदर आनन्द प्रकाश करनेवाले सहजही सुडौल विश्वासके योग्य अर्थात् कामदेवके उदय करनेवाले ऐसे एकांतमें स्त्रियोंके स्वच्छन्द सुभाषण मनको हरण करलेते हैं ॥ पाप हरनेवाला है जल जिसका ऐसी श्रीगंगाजीके तटपर बसै अथवा युवा स्त्रीके उस स्तनोंके मध्यमें बसै, जो मनको वशमें करलेता है और जिसपर हार पडा हुआ है ॥ ३० ॥ ३१ ॥

प्रियपुरतो युवतीनां तावत्पदमातनोतु हृदि मानः ॥
भवति न यावच्चंदनतरुसुरभिर्मधुसुनिर्मलः पवनः ॥ ३२ ॥

( सं० टी० ) प्रियेति । युवतीनां मानः अहंकारः तावत्पदमातनोतु विस्तारयतु यावत् मलयानिलो न भवति इति भोगादिलक्षणम् ॥ ३२ ॥

( भा० टी० ) गर्वीली स्त्रियोंके हृदयमें यह प्रसिद्ध मान तभी लों ठहरता है जब लों चंदनकी गंधभरी मलयाचलकी स्वच्छ वायु नहीं चलती ॥ ३२ ॥

अथ ऋतुवर्णनम् । तत्रादौ वसन्तस्य ॥

परिमलभृतो वाताः शाखा नवांकुरकोटयो
मधुरविरतोत्कण्ठा वाचः प्रियाः पिकपक्षिणाम् ॥
विरलसुरतस्वेदोद्गारा वधूवदनेन्दवः
प्रसरति मधौ राज्यां जातो न कस्य गुणोदयः॥३३॥

(सं०टी०) परिमलेति । परिमलभृतः परिमलयुक्ता वाताः पवनाः वान्तीति शेष-वृक्षाणां शाखाः नवांकुरकोटयः नवांकुरयुक्ताः अभवन् । पिकपक्षिणां प्रियाः मधुरः विरतोत्कण्ठा वाचः उच्चैरुत्कण्ठिता मधुरा वाचः अभवन् । विरलः स्वल्पः सुरते

संभोगे यः स्वेदस्तस्योद्गमो येषु तथाभूता वधूवदनेन्दवः अभवन् । एवं मधौ वसन्ते प्रसरति प्रकटिते सति अभवत् । तस्य मधोः रात्र्यां कस्य गुणोदयो मदनाविर्भावो न जातः । वसन्तस्य मनोहरत्वं सर्वेकषमिति भावः ॥ ३३ ॥

( भा० टी० ) सुगंधित पवन चलरही है, वृक्षोंकी शाखोंमें नये पत्रोंके अंकुर निकले हैं, कोकिलादि पक्षियोंकी वाणी मधुर सुंदर उत्कंठा-भरी प्यारी लगती हैं, और स्त्रियोंके मुखचंद्रपर रतिश्रमके विलग प्रस्वेद-बूंदके कणें शोभित हैं ऐसी वसंतऋतुकी रात्रिमें किस किस वस्तुमें गुणकी ज्योति नहीं प्रकाश होती ॥ ३३ ॥

मधुरयं मधुरैरपि कोकिला-
कलकलैर्मलयस्य च वायुभिः ॥
विरहिणः प्रणिहन्ति शरीरिणो
विपदि हन्त सुधापि विषायते ॥ ३४ ॥

(सं० टी०) मधुरिति । अयं मधुर्वसन्तः शरीरिणोपि विरहिणो मधुरैरपि कोकिलाकलकलैः तथा मलयस्य वायुभिः प्रणिहंति मारयति । ननु कोकिलाकलकलैर्मधुराः तथा वायुरपि प्रियकरः एभिर्मरणं न घटते इत्यत आह । विपदि विपत्काले सुधा अमृतमपि विषायते विषं भवति ॥ ३४ ॥

( भा० टी० ) मधुर मधुर कोकिलोंके शब्द और मलयाचलके पवनसे यह चैत्रमास विरहियोंका वध करता है इससे यह जान पडता है कि, विपत्तिमें अमृत भी विष होजाता है ॥ ३४ ॥

आवासः किल किंचिदेव दयितापार्श्वे विलासालसः
कर्णे कोकिलकाकलीकलरवः स्मेरो लतामण्डपः ॥
गोष्ठी सत्कविभिः समं कतिपयैः सेव्याः सितांशोः कराः
केषांचित्सुखयन्ति नेत्रहृदये चैत्रे विचित्राः क्षपाः ॥३५॥

( सं० टी० ) आवास इति । आवासः वसतिः किल इति श्रूयते विलासेन अलसः दयितापार्श्वे किंचिदेव स्मेरः प्रियो भवति, कर्णे कोकिलानां काकली सूक्ष्म-

ध्वनिः तथा कलरवः गंभीरो रवः शब्दः प्रियो भवति लतामण्डपः प्रियो भवति, कतिपयैः सत्कविभिः समं गोष्ठी प्रिया भवति सितांशोः कराः किरणाः सेव्याः भवन्ति, एते पदार्थाः केषांचिन्नेत्रहृदये सुखयन्ति, ये प्रवासिनस्तेषां दुःखरूपा भवन्ति, एवं चैत्रमासादौ क्षपा निशा विचित्रा भवन्ति ॥ ३५ ॥

( भा० टी० ) किल किंचित् विलाससे शिथिल हो प्यारीके संग रहना कानसे कोकिलाके शब्दकी कलकलाहट सुनना और चाँदनीका सुख उठाना, ऐसी सामग्रीसे चैत्रमासकी विचित्र रात्रियाँ किसी पुण्यवान्हीके हृदय और नेत्रोंको सुख देतीहुई बीतती हैं, किल किंचित् हाव भाव उसे कहते हैं कि, जहां क्रोध, आँसू, हर्ष प्रीति और रुखाई ये सब भाव एकही समय होयँ ॥ ३५ ॥

**पान्थस्त्रीविरहानलाहुतिकलामातन्वती मञ्जरी**
**माकन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ॥**
**अप्येते नवपाटलापरिमला[1]ः प्राग्भारपाटच्चरा**
**वांति क्लांतिवितानतानवकृतः श्रीखण्डशैलानिलाः३६॥**

( सं० टी० ) पान्थेति । अन्यत् किं वसन्ते भवति आम्रवृक्षस्य मञ्जरी पान्थस्य स्त्री तस्या विरह एवानलोऽग्निस्तस्मिन्नाहुतिकलामातन्वती विस्तारयन्ती एवंभूता मंजरी पिकाङ्गनाभिः सोत्कठमालोक्यते । अथ च श्रीखण्डशैलानिला मलयमारुताः प्राग्भार-पाटच्चरा वान्ति । कथंभूताः, नवा चासौ पाटला च तस्याः परिमला येषु तथाभूताः। पुनश्च, क्लान्तेर्वितानस्य तानवं कुर्वन्तीति तथाभूताः । एतादृशे वसन्ते कस्योत्कण्ठा न भवेत् ॥ ३६ ॥

(भा०टी०) बटोहियोंकी जो विरहिनी स्त्रियां उनकी विरहाग्निमें आहुति कला फैलातीहुई जो आमके मौर हैं उन्हें कोकिला बडे अभिलाषसे देखती हैं इस वसन्तऋतुमें ये नवीन पाटल पुष्पके सुगन्धके पुंजको चुरानेवाले और विरह विस्तारको नया करनेवाले मलयाचलके पवन भी गमन करते हैं॥ ३६॥

---

१ 'परिमलप्राग्भार' इति पाठः ।

सहकारकुसुमकेसरनिकरभरामोदमूर्छितदिगन्ते ॥
मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ३७ ॥

( सं० टी० ) सहकारेति । कथंभूते मधौ, सहकारस्य कुसुमानां केसराणि तेषां भरः समुदायस्तस्यामोदो गन्धस्तेन मूर्छिता दिगन्ता यस्मिन् । पुनः कथंभूते । मधुरं मधु पुष्परसस्तस्मिन् विधुरा आसक्ता मधुरा भ्रमरा यस्मिन् ॥ ३७ ॥

( भा० टी० ) आमकी मौरकी जो केसर उसके समूहकी सुगंध दिशाओंमें छायरही और मीठे मीठे मकरन्द पानकर जिसमें भ्रमर उन्मत्त होरहे हैं ऐसे ऋतुराज वसन्तमें किसे उत्कण्ठा नहीं होती ॥ ३७ ॥

## अथ ग्रीष्मवर्णनम् ।

अच्छाच्छचन्दनरसार्द्रकरा मृगाक्ष्यो
धारागृहाणि कुसुमानि च कौमुदी च ॥
मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदं च मदनं च विवर्द्धयन्ति ॥ ३८ ॥

( सं० टी० ) अच्छाच्छेति । अच्छाच्छः विमलतमो यश्चन्दनरसस्तेनार्द्राः करा यास ता मृगाक्ष्यः तथा च धारागृहाणि कुसुमानि च कौमुदी चंद्रकला, मन्दो मरुद्वायुः सुमनसो लताः, हर्म्यपृष्ठं शुचि एते पदार्था ग्रीष्मे मदं च मदनं च विवर्द्धयन्ति॥ ३८॥

( भा० टी० ) अति स्वच्छ चन्दनके रससे जिन स्त्रियोंका हाथ भींगा है फुहारेवाले मंदिर, मन्द सुगन्धित पुष्प, विकासित चाँदनी, सुगन्धित लता, मन्द मन्द पवन और महल की श्वेत छत ये सब सामग्री ग्रीष्मऋतुमें कामदेवको और मदको बढाते हैं ॥ ३८ ॥

स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः
परागः कासारो मलयजरजः सीधु विशदम् ॥

शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
निदाघे तूर्णं तत्सुखमुपलभन्ते सुकृतिनः ॥ ३९ ॥

( सं०टी० ) स्रज इति । स्रजो हृद्यः आमोदः परिमलो यासां ताः, व्यजनस्य पवनः, चन्द्रकिरणाः, परागः पुष्परजः, कासारः सरोवरं, मलयजं चन्दनं तस्य रजः, विशदं शुचि सीधु मद्यं, सौधो राजसदनं तस्य उत्सङ्गः उपरिभागः, प्रतनु कोमलं सूक्ष्मं वसनं पङ्कजदृशः कमलनयनाः स्त्रियः एतेषां पदार्थानां ग्रीष्मे सुखं तूर्णं शीघ्रं सुकृतिनो लभन्ते ॥ ३९ ॥

( भा ० टी० ) अच्छी सुगंधित माला, पंखेका वायु, चाँदनी, पुष्पोंका पराग, तडाग, चंदन, उज्ज्वल मद्य, श्वेत धामकी अच्छी ऊँची छत, अच्छे मलमलसे महीन वस्त्र और कमलनयनी सुंदर स्त्री इत्यादि पदार्थोंसे ग्रीष्मऋतुमें पुण्यवान् पुरुष सुख उठाते हैं ॥ ३९ ॥

सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशधरः
प्रियावक्राम्भोजं मलयजरजश्चातिसुरभि ॥
स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने
करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ॥ ४० ॥

## अथ वर्षासमयः ।

तरुणी चैषा दीपितकामा विकसितजातीपुष्पसुगन्धिः ॥
उन्नतपीनपयोधरभारा प्रावृट् कुरुते कस्य न हर्षम् ॥४१॥

( सं० टी० ) सुधेति । सुधया शुभ्रं धाम गृहं स्फुरन्तः अमला रश्मयः किरणा यस्यासौ शशधरश्चन्द्रः, प्रियाया वक्राम्भोजम्, अतिसुरभि सुगन्धि मलयजं रजः, स्रजो माल्यानि, हृद्यः आमोदो गन्धो यासां तास्तदिदमखिलं सर्वं रागिणि जने एतेषु पदार्थेषु विषयेषु रागो यस्य तस्मिन् जने अन्तःक्षोभं करोति न तु विषयसंसर्गविमुखे जने क्षोभं करोति ॥ ४० ॥ ४१ ॥

( भा० टी० ) चूनासे सफेद अच्छा उज्ज्वल धाम, निर्मल चाँदनीका चन्द्रमा, प्यारीका मुखकमल, सुगंधित चन्दन, अच्छे सुगंधित पुष्पोंकी माला, ये सब वस्तु अनुरागीपुरुषोंके हृदयमें अत्यंत क्षोभ करते हैं, परन्तु विषयके संसर्गसे जो विमुख हैं उनके हृदयमें नहीं ॥ तरुणीके वेषवाली कामदेवको उदित करनेवाली, जातिपुष्पके सुगंधको विकास करनेवाली, जिसके पुष्ट पयोधरके भार उन्नत हैं ऐसी यह वर्षा ऋतु किसको नहीं हर्षित करती है ? जाही, जूही, लता वा जावित्री पयोधर मेघ और स्तनकोभी कहते हैं ॥ ४० ॥ ४१ ॥

**वियदुपचितमेघं भूमयः कन्दलिन्यो**
**नवकुटजकदम्बामोदिनो गन्धवाहाः ॥**
**शिखिकुलकलकेकारावरम्या वनान्ताः**
**सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ४२ ॥**

( सं० टी० ) वियदिति । वियद्गगनम् उपचिता मेघा यस्मिन् तत् उपचितमेघम्, कंदला जाताः यासु ताः कन्दलिन्यो भूमयः, नवाः कुटजाः कदम्बाश्च तेषामामोदो गन्धो येषु ते गन्धवाहाः वायवः, शिखिकुलस्य मयूरकुलस्य केकारावाः वाणीशब्दास्तै रम्या वनान्ताः वनदेशाः एते प्रावृषि प्रावृट्काले सुखिनमसुखिनं वा सर्वमुत्कंठयंति मदनाविर्भावेन उत्कण्ठितं कुर्वन्ति ॥ ४२ ॥

( भा० टी० ) मेघसे व्याप्त आकाश और प्रफुल्लित पृथ्वी अर्थात् नये २ अंकुरोंपर ओसके जलसे पूर्ण, नवीन कुटज और कदम्बके पुष्पोंके समूहोंसे सुगंधित वायु, और मयूरोंके झुंडकी सुन्दरवाणीसे रमणीय वनके प्रांत, सब सुखी और दुःखी पुरुषोंको उत्कंठा.( कामदेवकी इच्छा ) देते हैं ॥ ४२ ॥

**उपरि घनं घनपटलं तिर्यग्गिरयोपि नर्तितमयूराः ॥**
**वसुधा कंदलधवला तुष्टिं पथिकः क्व यातु संत्रस्तः ४३॥**

(सं० टी०) उपरीति । कश्चन पथिकः मार्गे गच्छति यस्य उपरि घनं निबिडं घनानां पटलं, तिर्यगागमनप्रदेशे नर्तिता मयूरा येषु ते गिरयः वसुधा कन्दलैः धवला एवं सति पथिकः विरहेण क्व तुष्टिं संतोषं यातु प्राप्नोतु ॥ ४३ ॥

(भा० टी०) ऊपर घन घोर छाय रहा है, दहिने बाँएँ पहाडोंमें मयूर नाच रहे हैं नीचे भूमिकी दूब ओसोंसे धवली होरही हैं, ऐसे समयमें दीन बटोहीको संतोष कहाँसे आवे अर्थात् चारोंओरही विरहके उद्दीपनही करनेवालेहैं ॥ ४३ ॥

इतो विद्युद्वल्लीविलसितमितः केतकितरोः
स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ॥
इतः केकिक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ॥ ४४ ॥

(सं०टी०) इत इति । इतः विद्युद्वल्ली विद्युल्लता तस्याः विलसितम् इतः केतकितरोः स्फुरन्नतीव गन्धः, इतः प्रकर्षेण उद्यज्जलदनिदनस्य मेघशब्दस्य स्फूर्जितम्, इतः केकिनां मयूराणां क्रीडासु कलकलरवः गम्भीरशब्दः एवंसति पक्ष्मलदृशां स्त्रीणां संभृतरसाः रसवन्तः विहरादिवसा एते कथं यास्यन्ति गमिष्यंति ॥ ४४ ॥

(भा० टी०) एक ओर विद्युत् (बिजली) की छटाका विलास, एक ओर केतकी वृक्षकी उत्कट सुगन्ध, एक ओर मेघकी गर्जना, और एक ओर मयूरकी क्रीडाका कल २ शब्द ये सब जहां एकत्र हैं वे विरहके रसभरे दिन स्त्रियोंके कैसे बीतेंगे ॥ ४४ ॥

असूचीसंसारे तमसि नभसि प्रौढजलद-
ध्वनिप्राप्ते तस्मिन् पतति दृषदा नीरनिचये ॥
इदं सौदामिन्याः कनककमनीयं विलसितं
मुदं च म्लानिं च प्रथयति पथिष्वेव सुदृशाम् ॥ ४५ ॥

( सं०टी० )असूचीति । असूचीसंसारे न सूच्यते संसारो यस्मिन् तमसि अंधकारे एवंभूते नभसि श्रावणमासे । कथंभूते, प्रौढाश्च ते जलदाश्च तेषां ध्वनिप्राप्ते दृषदा पाषाणेन सह नीरनिचये पतति सति । एवमिदं सौदामिन्या विद्युतो विलसितं स्फुरणं कनकवत्कमनीयं सुंदरम् । सुदृशां स्त्रीणां पथिष्वेव मुदं हर्षं च विरहिणां म्लानिं च म्लानतां च प्रथयति प्रकटीकरोति ॥ ४५ ॥

( भा०. टी० ) ऐसे गाढे अन्धकारमें जिसमें सुई न प्रवेशकरसके जो आषाढ वा श्रावणके मासमें बडे मेघके शब्द और पत्थर सहित जल-वृष्टिमें विजुलीका बारबार चमकना सो स्त्रियोंको अपने २ बटोही पति-योंके प्रति सुख दुःख उत्पन्न करता है ॥ ४५ ॥

आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते
शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिंग्यते ॥
जाताः शीतलशीकराश्च मरुतो वान्त्यन्तखेदच्छिदो
धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे॥४६॥

( सं० टी० ) आसारेणेति । मेघच्छन्ने दुर्दिने दिनोदये जातेपि सति प्रियतमैः पतिभिः निद्रारसेन आसारेण पर्जन्यधारया यदा बहिर्हर्म्यतः गृहात् यातुं न शक्यते तदा शीतोत्कंपनिमित्तमायतदृशा विस्तीर्णनेत्रया स्त्रिया गाढमत्यन्तं यथा आलिंग्यते अथ च मरुतो वायवः शीतलाः शीकरा अंबुकणा येषां ते स्वेदच्छिदो वान्ति एवं धन्यानां प्रियासंगमे दुर्दिनमपि सुदिनतां याति सुखकरं भवति ॥ ४६ ॥

( भा० टी० ) वर्षाकी झडीमें स्त्रीलोग धामके बाहर नहीं निकलसकती हैं और स्त्री प्रीतमसे आलिंगन किये जाती हैं कि, बडा जाडा लगता और देह काँपता है यों कह कह इसी निमित्त स्त्रियोंसे प्रीतम भी आलिंगन करते जाते हैं और बाहर नहीं निकल सकते और ठंढे २ जलके कणोंसहित वायु मैथुनके अन्तमें श्रम हरनेवाला बहरहा है ऐसे धन्य पुरुषोंको प्यारीके संगमें दुर्दिन भी सुदिन होजाते हैं ॥ ४६ ॥

## अथ शरत्।

अर्द्धं नीत्वा निशायाः सरभससुरतायासखिन्नश्लथांगः
प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ॥
संभोगक्लान्तकान्ताशिथिलभुजलतातर्जितं कर्करीतो
ज्योत्स्नाभिन्नाच्छधारं पिबति न सलिलं शारदं मंदभाग्यः ४७

( सं० टी० ) अर्द्धमिति । कश्चन पुरुषः कामी निशायाः अर्द्धं नीत्वा सरभसं सुरते आयासः कष्टं तेन खिन्नः खेदं प्राप्तः अत एव श्लथांगः सन् हर्म्यपृष्ठे विविक्ते एकांते प्रकर्षेण उद्भूता असह्या तृष्णा तया, मदनिरतः शारदं सलिलं न पिबति स मन्दभाग्यः । कथंभूतं मधु, संभोगेन क्लांता कष्टीभूता कांता तस्याः शिथिलभुजलता तया तर्जितं निषेधितम् ॥ ४७ ॥

( भा० टी० ) आधी रात व्यतीत भयेपर वेगसहित मैथुनके श्रमसे जिसके अंग थकिरहे, मद्यमें मत्त, अत्यंत प्यासा, छतपर स्वच्छ और एकान्त ठौरमें बैठा, वैसेही मैथुनमें थकी स्त्रीने शिथिल भुजाओंसे झारी लाकर दिया और चाँदनीमें जिसकी स्वच्छ धारा दीख पडती है ऐसे शरदृतुके जलको न पीवे तो वह मन्दभागी जानना चाहिये ॥ ४७ ॥

## अथ हेमन्तः।

हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ॥
पीनोरःस्थलकामिनीजनकृताश्लेषा गृहाभ्यन्तरं
तांबूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ४८ ॥

( सं० टी० ) हेमन्ते इति । हेमन्ते ऋतौ केचित्पुरुषा दधि च दुग्धं च सर्पिः घृतं च एतानि अशनं येषां ते, मांजिष्ठं वासः बिभ्रति ते, काश्मीरं कुंकुमकेसरं तस्य द्रवः रसः तेन सान्द्रं निबिडं दिग्धमुपलिप्तमेवंभूतं वपुः येषां, तैर्विचित्रैः रतैः खिन्नाः खेदं प्राप्ताः, पीनं मांसलमुरःस्थलं यस्य एवंभूतः कामिनीजनस्तेन कृता आश्लेषा

आलिंगनानि येषां, ताम्बूलीदलैः पूगैः पूरितानि मुखानि येषां ते एवंभूताः धन्याः गृहाभ्यंतरं गृहमध्ये सुखं शेरते निद्रां कुर्वन्ति ॥ ४८ ॥

( भा० टी० ) दही, दूध, घृत और सुगंध शिखरन भोजन किये केशर कस्तूरी सघन सर्वांगमें लगाए, अनेक प्रकारके आसनभेदकी रतिसे खिन्न, पुष्ट जंघें और पुष्ट स्तनोंवाली स्त्रियां जिन्हें लपटाये, पान और सुपारी खाये, मञ्जीठके रंगे वस्त्रधारण किये धन्यपुरुष ही ऐसे प्यारीके साथ हेमंतऋतुमें सोते हैं ॥ ४८ ॥

## अथ शिशिरः ।

**चुंबन्तो गंडभित्तीरलकवति मुखे सीत्कृतान्यादधाना**
**वक्षःसूत्कंचुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ॥**
**ऊरूनाकंपयंतः पृथुजघनतटात्स्रंसयंतोंशुकानि**
**व्यक्तं कांताजनानां विटचरितकृतः शैशिरा वांति वाताः**

( सं० टी० ) चुंबन्त इति । शिशिरे कामिनः भोगकाले यथा कुर्वन्ति तथा वायवोऽपि कुर्वन्ति इति शेषः । अलकवति केशवति मुखे गण्डभित्तिः प्रति प्रबला वायवः मुखे केशान् इतरततो नयन्ति तेनैव मिषेण चुंबन्ति । पुनः कथं, सीत्कृतम् आदधानाः शीतातिशयेन सर्वेपि सीत्कृतानि कुर्वंति तान्येव वायुभिः कृतानि, उत्कंचुकेषु वक्षःसु स्तनभरे पुलकोद्भेदमापादयन्तः, ऊरूनाकम्पयन्तः, पृथुजघनतटात् अंशुकानि स्रंसयंतः निष्कासयंतः, एवं कांताजनानां विटचरितकृतः विटा भाण्डाः तैषां चरितमिव कुर्वन्ति ते शैशिराः शिशिरे भवा वाताः वांति वहंति ॥ ४९ ॥

( भा० टी० ) यह प्रकार है कि, शिशिरऋतुमें कामियोंके समान आचरण करतेहुये पवन चलते हैं कि, स्त्रियोंके कपोलोंको चूंबते हैं केशोंवाले मुखमें सीशब्दको कराते हैं नहीं कंचकी जिसपर ऐसी छातीपर स्तनोंमें रोमावलीको पैदा करते हैं जंघाओंको कँपाते हैं और मोटीजंघा ( रान ) ओंके वस्त्रोंको उडाते हैं ॥ ४९ ॥

**केशानाकलयन्दृशो मुकुलयन्वासो बलादाक्षिप-**
**न्नातन्वन्पुलकोद्गमं प्रकटयन्नालिंग्य कम्पञ्छनैः ॥**

वारंवारमुदारसीत्कृतकृतो दन्तच्छदान्पीडय-
न्प्रायः शैशिर एष संप्रति मरुत्कांतासु कांतायते ॥५०॥

(स० टी०) केशानिति । अथ शैशिरः मरुत् संप्रति इदानीं कान्तासु स्त्रीषु कांतायते कान्त इव भवति, तत्कथम् केशानाकलयन् दृशः दृष्टीः मुकुलयन् वासः वस्त्रं बलादाक्षिपन्निष्कासयन् पुलकाः रोमांचाः तेषामुद्गममातन्वन् विस्तारयन् आलिंग्य शनैः कंपयन् वारंवारमुदाराणि बहूनि सीत्कृतानि करोति तस्याः दन्तच्छदान् ओष्ठान् पीडयन् एवं प्रायः कांत एव भवति ऋतुवर्णनमिति कामिनां विषयिणां मनोरथस्तथा इति भावः । कथं तेषां कर्तव्यानि ज्ञात्वा त्यक्तव्यानि च इति कारणादुक्तानि अधुना पक्षद्वयानिरूपणम् ॥ ५० ॥

(भा० टी०) बालोंको बिखेरता, आंखोंको किञ्चित् २ मूँदता साडी बलात्कारसे उडाता, देहमें रोमांचित करता चलनेमें उद्वेग और कम्प प्रगट करता बेरबेर सीसीकरनेमें ओठोंको पीडित करता, इस प्रकारका शिशिर ऋतुका वायु पतिकासा आचरण करता है ॥ ५० ॥

असाराः सन्त्वेते विरतिविरसायासविषया
जुगुप्सन्तां यद्वा ननु सकलदोषास्पदमिति ॥
तथाप्यन्तस्तत्त्वे प्रणिहितधियामप्यतिबल-
स्तदीयोऽनाख्येयःस्फुरतिहृदयेकोऽपिमहिमा ॥ ५१ ॥

(सं०टी०) असारा इति । यत् यस्मात् कारणात् वा इति विकल्पे ननु इति वितर्के इदं सकलदोषास्पदम् इति जुगुप्संतां निन्दां कुर्वताम् एते विरतिविरसाः विरतौ विरसा एवंभूता आयासविषयाः असाराः निःसाराः सन्तु तथापि तत्त्वे प्रणिहितधियां वशीकृतबुद्धीनामपि तदीयः तस्याः स्त्रियाः अयं तदीयः कोपि महिमा अतिबलः बलवान् न आख्येयः वक्तुं न शक्यः एवंभूतः स्फुरति इदमेवाश्चर्यम् ॥ ५१ ॥

(भा० टी०) यह सब भोगविषय असार और वैराग्यमें विरस करनेवाले हों और इन्हें सब दोषोंका गृह समुझकर यदि लोग निंदाभी करें तौभी इन विषयोंकी महिमा अतिबलवान् है कि, कहनेके योग्य नहीं अंत

स्तत्त्व अर्थात् ब्रह्मविचारमें जिनकी बुद्धि स्थिर हो रही है उनके हृदयमेंभी प्रकाशित होती है ॥ ५१ ॥

भवन्तो वेदान्तप्रणिहितधियामाप्तगुरवो
विदग्धालापानां वयमपि कवीनामनुचराः ॥
तथाप्येतद्भूमो न हि परहितात्पुण्यमधिकं
नचास्मिन्संसारे कुवलयदृशो रम्यमपरम् ॥ ५२ ॥

( सं० टी० ) भवन्त इति । यूयं वेदान्ते प्रकर्षेण निहिता बुद्धिर्यैस्तेषामाप्ताश्च गुरवश्च । वयं तु विदग्धा आलापाः शब्दा येषां तथाभूतानां कवीनां अनुचराः सेवकास्तथापि न हि परहितात्पुण्यमधिकं एतद्भूमो च अस्मिन्संसारे कुवलयदृशः अपरं रम्यं नास्ति इति जानीमः ॥ ५२ ॥

(भा० टी०) तुम वेदांतवेत्ताओंके मंत्रगुरु अर्थात् शिक्षक हो और हमभी विचित्रकाव्यशास्त्रविनोदी कवियोंके दास हैं तथापि यह हम ठीक निवेदन करते हैं कि, इस संसारमें पराया हितकरनेसे अधिक अन्य पुण्य नहीं और कमलनैनी स्त्रियोंसे अधिक सुंदर वस्तु नहीं ॥ ५२ ॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् ॥
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ५३ ॥

( सं० टी० ) किमिति । इह लोके बहुभिरुक्तैर्वचनैः प्रयोजनं किम्, कथंभूतैः, युक्तिभिः शून्यैः प्रलापैः अर्थविरहितैः । तर्हि मयोच्यते तच्छ्रूयताम् । इह पुरुषाणां पुरुषैर्द्वयं सर्वदा सेवनीयम् । किम् अभिनवा नूतना अपूर्वा मदस्य लीलास्ताभिः लालसं सुन्दरीणां स्तनभरेण परिखिन्नं यौवनं सेवनीयम् अथवा वनं सेवनीयम् ॥ ५३ ॥

( भा० टी० ) युक्तिशून्य प्रलाप अर्थात् बकवादसे क्या प्रयोजन है पुरुषोंको दोही वस्तु सर्वदा सेवने योग्य हैं क्या ? नवीन मदांध लीलाके अभिलाषी और स्तनभारसे खिन्न ऐसी सुंदरियोंका यौवन अथवा वन ॥ ५३ ॥

# अथ दुर्विरक्तवर्णनम् ॥

सत्यं जना वच्मि न पक्षपाताल्लोकेषु सर्वेषु
च तथ्यमेतत् ॥ नान्यन्मनोहारि नितम्बिनी-
भ्यो दुःखैकहेतुर्न च कश्चिदन्यः ॥ ५४ ॥

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ॥
यावदेव न कुरंगचक्षुषां ताड्यते चपललोचनाञ्चलैः ॥५५॥

( सं० टी० ) सत्यमिति । भो जनाः अहं सत्यं वच्मि वदामि न पक्षपातात्स-र्वेषु इदमेतत्तथ्यं यथार्थं तत्किं नितम्बिनीभ्यः स्त्रीभ्यः मनोहारि मनस्तुष्टिकरं अन्यत् द्वितीयं नास्ति विषयिणां परमार्थिनां तु स्त्रीभ्यः दुःखस्य कारणमन्यन्नास्ति॥५४॥५५॥

( भा० टी० ) हे लोगो ! यह हम सत्य कहते हैं इसमें कुछभी पक्षपात नहीं करते संसारमें यह विदित है कि, स्त्रियोंसे अन्य मनहरण करनेवाली और दुःखदाई कोई भी वस्तु नहीं है ॥ विवेकियों-के भी निर्मल विवेकका दीपक तभीतक प्रकाशित रहता है जबतक मृगनयनी स्त्रियोंके चंचल लोचनरूपी आचलसे नहीं बुझाया जाता ॥ ५४ ॥ ५५ ॥

वचसि भवति संगत्यागमुद्दिश्य वार्त्ता
श्रुतिमुखरमुखानां केवलं पण्डितानाम् ॥
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां को विहातुं समर्थः ॥ ५६ ॥

( सं० टी० ) वचसीति । श्रुतिमुखरमुखानां बहुवक्तॄणां पंडितानां केवलं संगत्या-गमुद्दिश्य वार्ता भवति न तु त्यागं कुर्वंति ।किमिति कुवलयनयनानां कमलनयनानां स्त्रीणां मणीनां ग्रंथिः कांचीकलापो यस्मिन् तत् जघनं विहातुं त्यक्तुं कः समर्थः न कोऽपीत्यर्थः ॥ ५६ ॥

( भा० टी० ) संगत्यागकरनेकी कथा शास्त्रवक्ता पंडितोंके मुखसे केवल कथनमात्रही है क्योंकि, लालरत्नजडित करधनीवाली कमलनयनी स्त्रियोंके जघनस्थल छोडनेमें कौन समर्थ है ॥ ९६ ॥

स्वपरप्रतारकोऽसौ निन्दति योलीकपण्डितो युवतीः ॥
यस्मात्तपसोऽपि फलं स्वर्गस्तस्यापि फलं तथाप्सरसः५७॥

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ॥
किं तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥ ५८ ॥

( सं० टी० ) स्वपरेति । पंडितो युवतीर्निन्दति स स्वस्यापि परस्यापि प्रतारकः प्रतारणामात्रम् अलीकं वृथा करोति किमिति यस्मात्कारणात्तपसोऽपि फलं स्वर्गस्तस्यापि फलमप्सरसः ॥ ९७ ॥ ९८ ॥

( भा० टी० ) जो स्त्रियोंकी निंदा करता है वह झुँठा पंडित है आप तो ठगाही गया पर औरोंकोभी ठगाता है क्योंकि तपस्याका फल स्वर्ग और स्वर्गका फल अप्सराभोग है सो यह प्राप्त है ॥ उन्मत्त हाथीके मस्तक विदारनेवाले शूर इस पृथ्वीपर अनेकहैं और प्रचंड सिंहके मारनेमें दक्ष योधा भी कितनेही हैं परन्तु बलवानोंके आगे हम हठकर यह कहते हैं कि, कामदेवके मदका दलनेवाला कोई विरलाही पुरुष होगा ॥ ॥ ५७ ॥ ५८ ॥

सन्मार्गे तावदास्ते प्रभवति स नरस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ॥
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ५९

(सं० टी० ) सन्मार्गे इति । नरस्तावत्सन्मार्गे आस्ते इन्द्रियाणां जेता तावत्प्रभवति तावल्लज्जां विधत्ते विनयमपि तावत्समालंबते यावल्लीलावतीनाम् एते दृष्टिबाणाः हृदि न पतन्ति । कथंभूताः बाणाः भ्रूरेव चापो धनुः तेन आकृष्टाश्च मुक्ताश्च तु पुनः श्रवण-पथं गताः कर्णपर्यन्तं गताः पुनः कथंभूताः नीलपक्ष्माणः नीलानि नेत्रपक्ष्माणि त एव पुंखाः पक्षाः येषां ते पुनः कथंभूताः धृतिं धैर्यं मुष्णन्ति चोरयंति ते धृतिमुषः ॥५९॥

(भा० टी० ) पुरुष सन्मार्गमें तभीतक रहता है, इंद्रियोंको उसी समय तक वशमें रख सकता है और लज्जा विनयभी उसीकालतक रहती है जब तक श्यामबरौनी पलखरूपी पंख धारण किये, भौंहरूपी धनुषने छोडे, कानोंतक फैले धैर्य छुडानेवाले लीलावती सुंदर स्त्रियोंके नयनरूपी बाण छुटकर हृदयमें नहीं लगते ॥ ५९ ॥

उन्मत्तप्रेमसंरम्भादारभन्ते यदंगनाः ॥
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ६० ॥
तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ॥
यावज्ज्वलति नाङ्गेषु हंत पञ्चेषुपावकः ॥ ६१ ॥

(सं० टी० ) तावदिति । उन्मत्तमविचारितं यत्प्रेम तस्य संरंभादादरात् यत्कार्य-मङ्गना आरभन्ते तत्र प्रत्यूहं विपरीतं कर्तुं ब्रह्मापि खलु निश्चयेन कातरः असमर्थः ॥ ॥ ६० ॥ ६१ ॥

(भा० टी० ) अतिप्रेमके उमंगसे उन्मत्त होकर स्त्रीलोग जिस कामका आरम्भ करदेती हैं उस कामके रोकनेकी ब्रह्माकीभी शक्ति नहीं ॥ बडाई, पंडिताई, विवेक और कुलीनता ये सब मनुष्यकी देहमें तभीतक रहती हैं जबतक शरीरमें कामाग्नि नहीं प्रज्वलित होती ॥ ६० ॥ ६१ ॥

शास्त्रज्ञोऽपि प्रथितविनयोऽप्यात्मबोधोऽपि बाढं
संसारेऽस्मिन् भवति विरलो भाजनं सद्गतीनाम् ॥
येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती
वामाक्षीणां भवति कुटिलभ्रूलताकुञ्चिकेव ॥ ६२ ॥

( सं० टी० ) शास्त्रेति । शास्त्रज्ञः प्रथितविनयश्च बाढमत्यंतमात्मबोधः ज्ञानी सद्वृत्तीनां भाजनं पात्रम् एतादृशः पुरुषः अस्मिन्संसारे विरलः कदाचित् कश्चिद्भवति तर्हि सर्वेऽपि तादृशाः कुतो न भवंति तत्र कारणमस्ति येन कारणेन एतस्मिन् संसारे वामाक्षीणां सुनयनानां स्त्रीणां कुटिला वक्रा भ्रूलता आकुंचिका भवति आकर्षणं भवति कथंभूता भ्रूलता निरयनगरस्य द्वारमुद्धाटयंती उद्धाटयंती ॥ ६२ ॥

( भा० टी० ) शास्त्रज्ञ और विनयपूर्वक प्रसिद्ध और ज्ञानी क्यों न हो परन्तु इस संसारमें दृढतासे सद्वृत्तिका पात्र कोई विरलाही पुरुष होता है इस हेतु कि, यहां नरकनगरके द्वारके तालेको सुंदर नेत्रवाली स्त्रियोंकी टेढी भौंह लता घूमती कुंजीके समान खोलती है ॥ ६२ ॥

कृशः काणः खंजः श्रवणरहितः पुच्छविकलो
व्रणी पूयाक्लिन्नः कृमिकुलशतैरावृततनुः ॥
क्षुधाक्षामो जीर्णोऽपि [1]करकपालार्पितगलः
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ ६३ ॥

( सं० टी० ) कृश इति । कृशः काणः एकनेत्ररहितः खंजः एकपादेन हीनः श्रवणरहितः पुच्छविकलः व्रणी सर्वांगे व्रणा यस्य पूयेन क्लिन्नः लिप्तः कृमीणां कुलं बाहुल्यं तस्य शतैः आवृततनुः क्षुधया क्षामः कष्टीभूतः जीर्णः वृद्धोऽपि करकस्य मृन्मय-घटस्य कपालः कंठः तेन आर्पितगलः एतादृशः श्वा शुनीमनु पृष्ठत एति अतो मदनः हतम् अपि च आदौ शरीरावस्थया मृतप्रायं निहंति मारयति विवेको नास्तीत्यर्थः॥ ६३॥

( भा० टी० ) दुर्बल काना लँगडा बहिरा पूँछसे हीन जिसके घावोंमें राध भरीहो और शरीरपर कीडे फिरते हों भूँखसे थका वृद्ध मिट्टीके घडेका कंठ जिसके गलेमें हो ऐसाभी श्वान कुत्तीके पीछे भोगके लिये जाता है यह सिद्ध हुआ कि, कामदेव मरेकोभी मारता है ॥ ६३ ॥

स्त्रीमुद्रां झषकेतनस्य जननीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यांति कुधियो मिथ्याफलान्वेषिणः ॥

---

१ पिठरजकेति पाठान्तरम् ( एतच्चिन्त्यम् ) ।

ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ६४॥

(सं० टी०) स्त्रीति । राज्ञो मुद्रया सर्वं कार्यं भवति अतो झषकेतनस्य मदनस्य स्त्रीमुद्रा भवति अनया सर्वं भवति अतो मुद्रां विहाय त्यक्त्वा ये मूढाः कुधियः कुत्सितबुद्धयः यानि मिथ्याफलानि स्वर्गादिकानि अप्रत्यक्षाणि तानि अन्वेषयन्ति ते मूढाः कथम्भूतां स्त्रीमुद्रां मदनस्य जननीमुत्पादयित्रीं सर्वार्थानां सम्पादनम् करोतीति यस्याधीने मुद्रा तस्य सर्वाः सम्पदो भवंति यो मुद्राया उल्लंघनं करोति तस्य राजा दण्डकरो भवति मारयति च अतो मदनेन ते मूढास्तेनैव कर्मणा निहत्य निर्दयतरं यथा स्यात्तथा नग्नीकृता मुण्डिताश्च केचित्पंचशिखीकृताः केचिज्जटिलाः केचिदपरे कापालिकाः पात्रं करे धृत्वा भिक्षाटनं कारिताः राजापि येनानयः कृतः तस्य एवमेव दण्डं करोतीत्यर्थः ॥ ६४ ॥

( भा० टी० ) स्त्रियां कामदेवकी मुद्रा सब अर्थ और संपत्की करनेवाली हैं जो मूढ कुबुद्धि उन्हें छोड स्वर्गादिकी इच्छासे निकल भागते हैं उन्हें विरक्तके वेषमें न समझो किन्तु कामदेवने दया त्यागि दंड देकर उन्हें नङ्गा किया, सिर मुंडवाया, किसीके पांच चोटी जटा रखवाई. हाथमें ठीकरा दे भीख मँगवाया ॥ ६४ ॥

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपंकजं सुललितं दृष्ट्वैव मोहं गताः ॥
शाल्यन्नं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
स्तेषामिंद्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरम्॥६५॥

( सं० टी० ) विश्वामित्रेति । वातं वायुम् अम्बु उदकं च शुष्कपर्णानि च अश्नंति भक्षयंति ते वाताम्बुपर्णाशनाः एवंभूताः विश्वामित्रपराशरप्रभृतयः तेऽपि स्त्रीमुखपंकजं सुललितं सुन्दरं दृष्ट्वैव दर्शनमात्रेणैव मोहं गताः प्राप्ताः किमुत यतः शाल्यन्नं तण्डुलोदनं तदपि सघृतं पुनः पयोदधियुतं ये मानवा भुंजंति तेषामिन्द्रियनिग्रहः बत खेदेन कथं भवेत् अत्र दृष्टांतः यदि विंध्याद्रिः सागरं तरेत् तदाऽपूर्वोयमिन्द्रियनिग्रहः ॥६५॥

( भा० टी० ) विश्वामित्र पराशर इत्यादि बडे बडे ऋषि जो वायु जल और पत्ते खाय पीके रहजाते थे वेभी स्त्रीमुखकमलको देखके मोहको प्राप्त हुए अब जो मनुष्य अन्न घी दूध दही इत्यादि अच्छे व्यञ्जन भोजन करते हैं उनकी इंद्रियां जो वशमें होजांय तौ समुद्रपर विंध्याचलके तैरनेमें क्या आश्चर्य है अर्थात् इंद्रियोंको वशमें नहीं करसकते ॥ ६५ ॥

इति दुर्विरक्तवर्णनं समाप्तम् ।

## अथ स्त्रीणां परित्यागप्रशंसा ।

**संसारेस्मिन्नसारे कुनृपतिभुवनद्वारसेवावलम्ब-**
**व्यासंगव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः ॥**
**यद्येताः प्रोद्यदिंदुद्युतिनिचयभृतो नस्युरम्भोजनेत्राः**
**प्रेङ्खत्काचीकलापाःस्तनभरविनमन्मध्यभागास्तरुण्यः ६६**

( सं० टी० ) संसोर इति । प्रकर्षेणोद्यदिंदोर्द्युतीनां तेजसां निचयं समुदायं बिभ्रति ताः प्रेंखन् शब्दायमानः काञ्चीकलापो यासां ताः स्तनानां भरेण विनम्रः मध्यभागो यासां ताः एवंभूताः एता अम्भोजनेत्राः स्त्रियः तरुण्यो न स्युः न आसन् तर्हि अमलधियो मानवा अस्मिन् असारे संसारे कुनृपतयः कुत्सिता नृपतयस्तेषां भवनद्वाराणां सेवावलम्बने व्यासंगस्तेन व्यस्तधैर्यं एवं मानसं मनः कथं विदध्युः कुर्युः । एतस्य भावः । यदि स्त्रियो न आसन् तदा बुद्धिमन्तः सेवां न कुर्युः स्त्रीनिमित्तं राजसेवां कुर्म इति व्यासंगेन मनः चंचलमधैर्यं भवति ॥ ६६ ॥

( भा० टी० ) उदितचंद्रमाकीसी कांतिधारी कमलनेत्रवाली झूलती हुई करधनीकी लरियोंवाली और स्तनभारसे झुकी कटिवाली युवती स्त्री यदि न हो अर्थात् इनसे स्नेह न होय तौ इस असारसंसारमें निर्मल बुद्धिवाले मनुष्य खोटेराजोंके द्वारकी सेवा नाना भाँतिके कलंकसे अधीरचित्त होकर क्यों करैं ॥ ६६ ॥

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थिते श्रेयसि ॥
कः कुर्वीत शिरः प्रणाममलिनं मानं मनस्वी जनो
यद्यत्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥६७॥

( सं० टी० ) सिद्धेति । यदि स्मरास्त्रं स्त्रियो न स्युः नासन् तदा हिमवतः हिमालयस्य स्थाने स्थिते सति कामेन कः शिरः प्रणाममलिनं कुर्वीत कथंभूताः स्त्रियः अत्रस्ता ये कुरंगशावास्तेषां नयनानीव नयनानि यासां ताः कथंभूते हिमवतः स्थाने सिद्धैः अध्यासिताः अधिष्ठिताः कंदरा यस्य हरवृषो नंदी तेन स्कंधेन अवगाढा अवरुद्धा द्रुमा यस्मिन् पुनः गंगाधौतानि शिलातलानि यस्मिन् श्रेयसि पुण्यरूपे । अयं भावः । प्रशस्तं शुद्धं मनो यस्य स मनस्वी जनः यस्य मनः शुद्धं तस्य साधने तस्य अनपेक्षा यदा मलिनं मनस्तदा मनसः शुद्ध्यर्थं साधनांतराणि कर्तव्यानि संप्रति मनो मलिनं स्त्रीभिरेव क्रियते अतः स्त्रीणां प्रभाव एव यदि ता उत्पन्ना नस्युः तदा मनोपि मलिनं नैव भवेत् तदा मनस्वी जनः हिमवतः स्थाने गत्वा शिरः प्रणामेन किमर्थं मलिनं करिष्यति मलिनतायाः कारणं स्त्री एव स्त्री मदनस्य अस्त्रं यस्यांगं स गच्छति स मूर्छितो भवति ॥ ६७ ॥

( भा० टी० ) सिद्ध लोग जिस कंदरामें बैठे हैं और महादेवजीका बैल जहाँ वृक्षोंमें कंधा रगडता फिरता है और गंगाजलसे जहांके पाषाण धोये जाते हैं ऐसा हिमालयका स्थान कल्याणदायक छोडकर कौन मनुष्य स्त्रीपुरुषलोगोंके समीप जाकर माथा झुकाय प्रमाणकर अपने मनको मलीन करता यदि भीतिरहितहरिण शावकनयना कामा सुस्वरूप कामिनी घरमें न होती ॥ ६७ ॥

संसार तव निस्तारपदवी न दवीयसी ॥
अंतरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ६८ ॥

( सं० टी० ) संसारेति । रे संसार यदि अन्तरा त्वन्मध्ये मदिरेक्षणाःस्त्रियो दुस्तरा न स्युस्तदा तव निस्तारपदवी स्थितिः न दवीयसी अतिदीर्घा नैव ॥ ६८ ॥

( भा० टी० ) हे संसार ! तुझसे पार होना कुछ दुस्तर न था यदि अच्छे नेत्रवाली कठिन स्त्रियां बीचमें बाधक न होतीं ॥ ६८ ॥

इति स्त्रीणां परित्यागविधिः ।

## अथ यौवनप्रशंसा ।

राजंस्तृष्णांबुराशेर्नहि जगति गतः कश्चिदेवावसानं
कोवार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागे ॥
गच्छामः सद्म तावद्विकसितनयनेन्दीवरालोकनीनां
यावच्चाक्रम्य रूपं झटिति न जरयालुप्यतेप्रेयसीनाम् ६९॥

( सं० टी० ) राजन्निति । भो राजन् ! इह जगति कश्चिदेव तृष्णाम्बुराशेः तृष्णासमुद्रस्य अवसानं पारं नहि गतः स्ववपुषि यौवने च सानुरागे अतिप्रिये गलिते सति प्रभूतैः पुष्कलैः अर्थैर्द्रव्यैः को वार्थः प्रयोजनं तावद्विकसितानि नयनान्येव इंदीवराणि तैः आलोकितुं द्रष्टुं शीलं यासां तासां प्रेयसीनां प्रियाणां सद्म गृहं प्रति गच्छामः यावत् जरया तासां रूपमाक्रम्य झटिति शीघ्रं न लुप्यते ॥ ६९ ॥

( भा० टी० ) हे महाराज ! इस तृष्णारूपी समुद्रके कोई पार न गया और जब हमारी अनुरागभरी युवाअवस्था देहहीमें जीर्ण होगई तब अधिक द्रव्यही प्राप्त करके हमको क्या करना है अतः शीघ्रही अपने घर चले जाँय ऐसा न हो कि, विकसितकुमुद और कमल ऐसे नेत्रवाली हमारी प्यारियोंका रूप वृद्धावस्था घुला २ बिगाड न डाले यहां कुमुद रात्रिविकासी और कमल दिनविकासीसे अभिप्राय है इससे यह सूचना होती है कि, वे रातदिन हमारा मार्ग देखती होंगी ॥ ६९ ॥

रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतु-
र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ॥
कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन्नह्यनर्थं निजकुलदहनंयौवनादन्यदस्ति॥७०॥

( सं० टी० ) रागस्येति । अस्मिन् लोके यौवनात्तारुण्यादन्यत् द्वितियमनर्थमनर्थकरं नास्ति कथंभूतं यौवनं रागस्य इच्छाया एकमगारं गृहं नरकाणां शतानि तेषु महादु:खानि तेषां प्राप्तिस्तस्य हेतुः कारणं मोहस्योत्पत्तिः तस्या बीजं ज्ञानलक्षणस्य ताराधिपस्य चंद्रस्य जलधरपटलं मेघपटलमाच्छादकं कन्दर्पो मदनस्तस्य एकं मित्रं प्रकटिता विविधा नानाप्रकाराः स्पष्टा दोषास्तेषां प्रबन्धं रचना निजं स्वकीयं कुलं तस्य दहनं दाहकम् एवं यौवनं निन्द्यमिति भावः ॥ ७० ॥

( भा० टी० ) अनुरागका घर, सैकडों नरकोंके दुःख प्राप्त होनेका हेतु, मोहकी उत्पत्तिका बीज, ज्ञानरूपी चन्द्रमाके ढाकनेका मेघ, कामदेवका एकही मित्र, अनेक दोषोंका प्रकट करनेवाला वैराग्य और नीतिका हरण करने वाला इस लोकमें युवा अवस्थाके व्यक्तिरिक्त ( भिन्न ) दूसरा कोई अनर्थ नहीं है ॥ ७० ॥

**श्रृंगारद्रुमनीरदे प्रचुरतः क्रीडारसस्रोतसि**
**प्रद्युम्नप्रियबान्धवे चतुरतामुक्ताफलोदन्वति ॥**
**तन्वीनेत्रचकोरपारणविधौ सौभाग्यलक्ष्मीनिधौ**
**धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने॥७१॥**

( सं० टी० ) शृङ्गारेति । यः नवे यौवने तारुण्ये प्राप्ते सति विक्रियां विकारं न कलयति स करोति स धन्यः कथंभूते यौवने शृंगारा एव द्रुमास्तेषां नीरदे यथा जलप्राप्तौ वृक्षाः शोभन्ते तथा यौवनेन शृंगाराः शोभन्ते प्रचुरतः क्रीडानां रसास्तेषां स्रोतसि सेतौ प्रद्युम्नो मदनस्तस्य प्रिये बान्धवे बन्धौ चतुरतालक्षणानि मुक्ताफलानि तेषामुदन्वति समुद्रे तन्वी सुन्दरस्त्री तस्या नेत्रे एव चकोरौ तयोः पारणं तस्य विधाने सौभाग्यलक्ष्मीनिधौ स्थापनामात्रे ॥ ७१ ॥

( भा० टी० ) शृङ्गाररूपी वृक्षोंका सींचनेहारा मेघ, विस्तारितक्रीडारसका सोता, कामदेवका प्यारा भ्राता, चतुरतारूपी मोतियोंका समुद्र, स्त्रियोंके नेत्ररूपी चकोरका पूर्णचन्द्र और सौभाग्यलक्ष्मीका एकपात्र ऐसी युवा अवस्था पाकर जो पुरुष विकारको नहीं प्राप्त होता सो धन्य है ॥ ७१ ॥

इति यौवनप्रशंसा समाप्ता ।

# अथ कामिनीगर्हणम् ।

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युत्सुकः
पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ॥
दृष्ट्वा माद्यति मोदतेऽतिरमते प्रस्तौति जानन्नपि
प्रत्यक्षाशुचिपुत्तिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ७२॥
स्मृता भवति तापाय दृष्टा चोन्मादवर्द्धिनी ॥
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ७३ ॥

( सं० टी० ) कान्तेति । पुरुषः स्त्रियं प्रत्यक्षम् अशुचीनां पुत्तिकां जानन्नपि उत्सुको विमर्यादो भवति मोदते च हर्षं प्राप्नोति रमते च इति स्तौति इतीति कथं तस्या अभिधानं गृह्णाति कांता सुंदरी उत्पललोचना विपुलः श्रोणीभरः कटिप्रदेशो यस्याः सा पीनौ मांसलौ उत्तुंगौ ऊर्ध्वौ पयोधरौ यस्याः सा सुष्ठु मुखाम्भोजं यस्याः सा एवमभिधानानि गृहीत्वा स्तौति अहो इति आश्चर्यमिदं मोहस्य दुश्चेष्टितम् ७२॥७३॥

( भा० टी० ) कांता, कमलनयनी. बडे नितम्बवाली, पुष्ट और उत्तुंग ऊंचे स्तनवाली, सुन्दरकमलमुखी और सुन्दर भौंहवाली, यों कहकह पण्डितलोगभी स्तुति करते हैं और देखके मोहित होते हैं आनन्द पाते रमण करते और उत्कण्ठित होते हैं प्रत्यक्ष ही अपवित्रताकी पुतलीरूप स्त्री है उसपर देखो यह मोहकी क्या खोटी चेष्टा है ॥ जो स्मरणसे सन्ताप देती है देखनेसे उन्माद बढाती अर्थात् मदवाला करदेती है और स्पर्शसे मोहित करलेती है ऐसी स्त्रियोंको प्रिया क्यों कहते हैं॥७२॥७३॥

तावदेवामृतमयी यावल्लोचनगोचरा ॥
चक्षुःपथादपगता विषादप्यतिरिच्यते ॥ ७४ ॥
नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ॥
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ७५ ॥

---

१ मुह्यति । २ विद्वानपि ।

( सं० टी० ) तावदिति । विषादतिरिच्यते अधिका भवति ॥ ७४ ॥ ७५ ॥

( भा० टी० ) स्त्री तभीलौं अमृतमय है जबलौं नेत्रके सामने है नेत्रसे जब दूर हुई तब विषसेभी अधिक होजाती है अर्थात् विरहसे सन्ताप देती है ॥ स्त्रियोंसे परे न कोई अमृत है न विष, यदि वह प्रीति करै तो अमृतकी लता है और प्रीति तोड बैठे तो विषकी मंजरी है ॥ ७४ ॥ ७५ ॥

आवर्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ॥
स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिनां मोहपाशः ७६

(सं०टी०) आवर्त्तः इति । लोके यन्त्राणि संति तैर्मारणोचाटनवशीकरणादिक्रियाः क्रियन्ते अतः स्त्रीयंत्रं केन ब्रह्मणा सृष्टं निर्मितं कथंभूतं संशयानामावर्तः परस्त्रीस्वभावेन सत्वकृत्स्नो विदितश्चेत् इतरे संशयं कुर्वन्ति पुनः दोषाणां सन्निधानं सर्वे दोषास्तत्सन्निधाने भवंति अप्रत्ययानामगुणानां क्षेत्रं स्वर्गद्वारस्य विघ्नो नाशनशीलं नरकाणां यत्पुरं तस्य मुखं सर्वासां मायानामलीकानां करंडं स्थापनपात्रम् एतादृशं स्त्रीयन्त्रं प्राणिनां मोहपाशो भवति ॥ ७६ ॥

( भा० टी० ) संशयोंका भँवर, अविनयका घर, साहसका नगर, दोषोंका पात्र, अविश्वास और सैंकडों कपटका खेत, स्वर्गद्वारका विघ्नकारक, नरकनगरका द्वार, मायोंका पेटारा, अमृतलपेटा विष और प्राणियोंके फँसानेका फन्दा ऐसा स्त्रीरूपी यंत्र किसने वा ब्रह्माने सृजा हैं ॥ ७६ ॥

सत्यत्वेन शशांक एष वदनीभूतो नवेन्दीवर-
द्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता ॥
किन्त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मंदो जनः सेवते ॥७७॥

लीलावतीनां सहजा विलासा
स्तएव मूढस्य हृदि स्फुरन्ति ॥
रागो नलिन्या हि निसर्गसिद्ध-
स्तत्र भ्रमत्येव मुधा षडंघ्रिः ॥ ७८ ॥

( सं० टी० ) सत्येति । एषः शशांकः सत्यत्वेन वदनीभूतो नैव न चेंदीवरद्वंद्वं सत्यत्वेन लोचनतां गतं कनकैः सुवर्णैरपि सत्यत्वेन अंगयष्टिर्न कृता । किं तु एवमुक्त-प्रकारेण कविभिः उपमा दत्ताऽतः प्रतारितमनास्तत्त्वतो जानन्नपि मन्दो जनः मृगदृशां त्वङ्मांसास्थिप्रचुरं वपुः सेवते ॥ ७७ ॥ ७८ ॥

( भा० टी० ) देखो तो सच चन्द्रमाही मुख नहीं बनगया कमलही दोनों नेत्र नहीं हुए, स्वर्णहीसे देह नहीं बना है यह स्त्रियोंका शरीर चाम, मांस और हाडमय है परन्तु यह बात जानकर भी कवियोंके बहकानेसे अन्धे अर्थात् विवेक रहित मनुष्य उसे सेवन करते हैं ॥ लीला-वती स्त्रियोंका लीला करना सहज स्वभावहै सोई मूढोंके हृदयमें वशीकरण हो लगता है जैसे कमलिनीमें ललाई स्वाभाविक होती है भ्रमर उसपर व्यर्थही आसक्त होकर घूमता है अर्थात् वह समझता है कि, मेरे ही लिये ललाई चमकाय रही है ॥ ७७ ॥ ७७ ॥

यदेतत्पूर्णेन्दुद्युतिहरदुदाराकृतिवरं
मुखाब्जं तन्वंग्याः किल वसति तत्राधरमधु ॥
इदं तावत्पाकद्रुमफलमिवातीव विरसं
व्यतीतेस्मिन्काले विषमिव भविष्यत्यसुखदम् ॥७९॥

( सं० टी० ) यदेतदिति । यत् यस्मात्कारणात् पूर्णेन्दुः तस्य द्युतिः तेजः तां हरतीति तथाभूतोदारा आकृतिर्यस्य यत् वरं श्रेष्ठम् एवं तन्वंग्या मुखाब्जं तत्र अधरमधु वसतीति किल श्रूयते तर्हि इदं तावत्पाकद्रुमस्य फलं अस्मिन्काले यौवनेऽतीते

---

१ धरम् ।

अतिक्रमिते सति अतीव विरसं विषमिवासुखदं भविष्यति यथा पाकद्रुमस्य फलं पक्त्वा-कालोपचितं चेत् रसवत् नोचेत् तत्कालातिक्रमेण तत्र नश्यति विषमिव भवति तथा तरुण्या मुखमपि ॥ ७९ ॥

( भा० टी० ) पूर्णमासीके चन्द्रमाकी छबि हरनहार सुन्दर आकार-वाली स्त्रियोंका मुखकमल जिसमें अधरामृत रहता है वह अज्ञात वा युवा अवस्थामें अच्छा लगता है फिर वह काल व्यतीत होनेपर ज्ञात वा वृद्धापन प्राप्त होनेसे मंदारके फलके समान विषसा बुरा लगेगा ॥ ७९ ॥

उन्मीलत्त्रिवलीतरङ्गनिलया प्रोत्तुङ्गपीनस्तन-
द्वन्द्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी ॥
कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते
संसारार्णवमज्जनंयदिततोदरेणसंत्यज्यताम् ॥ ८० ॥
जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ॥
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥८१॥
मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम्॥
अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताडयते॥८२

( सं० टी० ) उन्मीलदिति। कान्तां नाम नदीं कृत्वा उभयोः सादृश्यं वर्ण्यत उन्मीलत्त्रिवली रोमावली सा इव तरंगास्तेषां निलयं स्थानं यस्याः सा प्रकर्षेण उत्तुंगम् उच्चंपीनं मांसलं स्तनद्वयं तदेव उद्यतं चक्रवाकमिथुनं यस्याः सा वक्त्रमेवाम्बुजं तेन उद्भासिता शोभायमाना एवंभूता कान्ताकारधरा नदी इत्थमभितः समंततः क्रूरः आशयः अभिप्रायो यस्याः सा नदीपक्षे आशयः आवर्तः हे जनाः। यदि भवतां संसारार्णवमज्जनं नेष्यते इच्छा नास्ति तर्हि भवद्भिः इयं दूरेण संत्य ज्यताम् ॥ ८० ॥ ८१ ॥ ८२ ॥

( भा० टी० ) शोभितपेटकी त्रिवलीही तरंगका समूह है उत्तुंग और पुष्ट दोनों स्तनही उसमें चक्रवाकके जोडे हैं जिसका गंभीर

आशय मुखरूपी कमलसे शोभित है ऐसी स्त्रीका आकार धारण किये नदी है सो हे पुरुषो ! जो तुम संसारसमुद्रममें न मग्नहुआ चाहो तो इसे दूरहीसे परित्याग करो इसका यह तात्पर्यहै है कि, नदीमें गिरी वस्तु घूम फिरके समुद्रमें जा पडती है ॥ बातें तो किसी अन्य पुरुषसे करती है और विलाससहित औरहीकी ओर देखती है और हृदयमें औरहीसे मिलनेकी चाह रखती है फिर कहो तो इनमेंसे कौन स्त्रियोंका प्यारा है सो नहीं जान पडता ॥ स्त्रियोंके अधरमें अमृत और छातियोंमें विष रहता है इसीहेतु लोग अधरपान करते हैं और छातीमें मुष्टिका प्रहार करते हैं ॥ ८० ॥ ८१ ॥ ८२ ॥

अपसर सखे दूरादस्मात्कटाक्षशिखानला-
त्प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ॥
इतरफणिना दष्टा शक्याश्चिकित्सितुमौषधै-
श्चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः॥८३॥

( सं० टी० ) अपसरेति । हे सखे योषित्सर्पात् दूरादपसर गच्छ कथं भूतात् सर्पात् कटाक्ष एव विशिखो बाणः तस्य अनलः अग्निर्यस्मिन् तस्मात् पुनः कथंभूतात् प्रकृत्या स्वभावेन दैवेन वा विषमात् कुटिलात् वक्रात् पुनः विलासा एव फणास्ता बिभर्ति तस्मात्किमित्युच्यते इतरफणिना सर्पेण दष्टाः औषधैश्चिकित्सितुं शक्यंते चतुरवानिताभोगिग्रस्तं मन्त्रिणः हि निश्चयेन त्यजन्ति अतो दूरादेव अपसर ॥ ८३ ॥

( भा० टी० ) हे मित्र! सहजही क्रूर और विलासरूपी विषाग्निसे दूर भाग क्योंकि, अन्य सर्पोंका डसाहुआ औषधींसे अच्छा होसक्ता है पर चतुर स्त्रीरूपी सर्पके डसेहुयेको मन्त्रतन्त्रवाले भी छोड भागते हैं ॥ ८३ ॥

विस्तारितं मकरकेतनधीवरेण
स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ॥

येनाचिरात्तदधरामिषलोलमर्त्य-
मत्स्यान्विकृष्य पचतीत्यनुरागवह्नौ ॥ ८४ ॥
कामिनीकायकान्तारे कुचपर्वतदुर्गमे ॥
मा संचर मनःपान्थ तत्रास्ते स्मरतस्करः ॥ ८५ ॥

( सं० टी० ) विस्तारितमिति। मकरकेतनेन मदनेन धीवरेण कैवर्तकेन अत्र भवाम्बुराशौ भवसमुद्रे स्त्रीसंज्ञितम् बडिशं जालं विस्तारितं प्रसृतं किमर्थं येन बडिशेन अचिरात्तत्क्षणात्तस्याः स्त्रियाः अधर एव आमिषं तस्मिँल्लोलाः सतृष्णा ये मर्त्यमत्स्याः तान् विकृष्य अनुरागः प्रीतिः स एव वह्निः तस्मिन्पचति ॥ ८४ ॥ ८५ ॥

( भा० टी० ) इस संसाररूपी समुद्रमें कामदेवरूपी केवटने स्त्रीरूपी जालको इसलिये फैलाया है कि, वह कामदेव मनुष्यरूपी मच्छ उसके अधरमांसके जो लोभी हैं उन्हें वशमें कर अनुरागरूपी अग्निमें पकाता है॥ स्त्रियोंका शरीररूपी वन जो कुचरूपी पर्वतोंसे अतिदुर्गम हो रहा है उसमें हे बटोही मन तूं मत जा तहां कामदेवरूपी चोर रहता है ॥ ८४ ॥ ८५ ॥

व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिनाहिना वरमहं दष्टो न तच्चक्षुषा ॥
दष्टे संति चिकित्सका दिशिदिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य नहि मे वैद्यो न चाप्यौषधम्॥८६॥

( सं० टी० ) व्यादीर्घेणेति। तच्चक्षुषा तस्याः चक्षुषा अहिना अहं दष्टः न वरं श्रेष्ठमुत्तमम्। कथंभूतेन विशेषेण आदीर्घेण चलेन चञ्चलेन वक्रगतिना तेजस्विना भोगिना भोगो नाम अहिदेहः विद्यते यस्य चक्षुषः नानाभोगा भवन्ति। नीलाब्जवत् द्युतिर्यस्य तेन इतरेण अहिना दष्टे दिशि दिशि प्रायशः धर्मार्थिनः चिकित्सकाः सन्ति परंतु मुग्धाक्षी स्त्री तस्या ईक्षणवीक्षितस्य मे वैद्यो नास्ति औषधमपि नास्ति ॥८६॥

( भा० टी० ) बडा लम्बा चञ्चल टेढी चालवाला और तेजवाला फनधारी नीलकमलसा काला सर्प जो मनुष्यको काट ले तो अच्छा परंतु

स्त्रीके कटाक्षका काटा अच्छा नहीं क्योंकि, सांपके डसेको बचानेवाले सब देशमें बसते हैं प्रायः धर्मार्थीभी होते हैं पर अच्छे नेत्रवाली स्त्रीके दृष्टिसे काटे हुयेको न कोई मन्त्र न औषधि है ॥ ८६ ॥

इह हि मधुरगीतं नृत्यमेतद्रसोऽयं
स्फुरति परिमलोऽसौ स्पर्श एष स्तनानाम् ॥
इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणो
ह्यहितकरणदक्षैः पञ्चभिर्वञ्चितोऽसि ॥ ८७ ॥

( सं० टी० ) इहेति । इह लोके मधुरगीतं कर्णयोर्विषयः एतन्नृत्यं चक्षुषोर्विषयः अयं रसः रसनायाः विषयः असौ परिमलः स्फुरति घ्राणस्य विषयः एष स्तनानां स्पर्शः त्वचो विषयः इति पञ्चेन्द्रियाणां पञ्च विषयाः हे जन ! त्वमेभिः पञ्चभिरिन्द्रियैः भ्राम्यमाणः सन् वंचितोऽसि कथंभूतैरिन्द्रियैः हतः नाशितः परमार्थो यैः पुनः अहितं नरकादिकं तस्य करणे दक्षैः ॥ ८७ ॥

( भा० टी० ) यह कैसी सुन्दर मधर गीत है, रूप देखो कैसा अच्छा है, इस वस्तुका रस कैसा स्वादिष्ठ है, इस वस्तुकी कैसी अच्छी सुगंध है, स्त्रीके स्तनोंका स्पर्श क्या अच्छा सुख देता है इस भाँति परलोकके नष्ट करनेवाली और अपने प्रयोजन साधनेमें अति धूर्त हैं उन पाँचों ज्ञानेन्द्रियोंसे हे नर ! तू हेर फेर कर ठगा गया ॥ ८७ ॥

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः ॥
भ्रमावेशादङ्गे किमपि विदधद्भङ्ग्यमसमं
स्मरोऽपस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ ८८ ॥

( सं० टी० ) न गम्य इति । अयं स्मरः मदनः अपस्मारे वर्तते अपस्मारनिवारणार्थमुपायाः संति ते कर्तव्याः इति चेत्तर्हि अयं तथा न भवति । अयं कथंभूतः मन्त्राणां न गम्यः भैषज्यविषयः न भवति पुनः विविधैरनेकप्रकारैः शान्तिकशतैः

न चापि प्रध्वंसं व्रजति नाशं न प्राप्नोति अथ च भ्रमस्य आवेशात् अंगे किमपि भव्यं कर्तव्यमसमं विदधत् यत्किंचित्करोति दृशं दृष्टिं भ्रमयति घूर्णयति च ॥ ८८ ॥

( भा० टी० ) यह कामदेवरूपी अपस्मार ( मृगी ) रोग भ्रमक आवेशसे बडा दुःखदाई शरीरको तोडता और मनको भ्रमाता नेत्रोंका घुमाता है और इस रोगमें मंत्रोंकी गति नहीं औषधीभी नहीं काम करती अनेक प्रकारकी शांति अर्थात् पाठ पूजादिसे भी नाश नहीं होता ॥८८॥

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ॥
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ८९॥
वेश्यासौ मदनज्वाला रूपेन्धसमेधिता ॥
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ९० ॥

( सं० टी० ) जात्यन्धायेति । पण्यस्त्रीषु वेश्यासु कः रज्येत इच्छां करोति कथंभूतासु जात्यंधाय च दुर्मुखाय जरया जीर्णानि अखिलानि अंगानि यस्य तस्मै ग्रामीणाय अचतुराय दुष्कुलं नीचकुलं तत्र उत्पन्नाय च गलत्कुष्टेन अभिभूताय पीडिताय एवमादये लक्ष्मीलवश्रद्धया अल्पद्रव्यप्राप्त्यर्थं मनोहरं सुंदरं निजं स्वकीयं वपुः शरीरं प्रयच्छन्तीषु पुनः कथंभूतासु विवेक एव कल्पलतिका कल्पवल्ली तस्याः शस्त्रीषु शस्त्रभूतासु छेत्रीषु ॥ ८९ ॥ ९० ॥

( भा० टी० ) जन्मांध, कुरूप, वृद्धापनसे शिथिलांग, गँवार नीचजाति और टपकते कोढसे भरे पुरुषोंकोभी अपना सुंदर देह थोडे धनकी आशासे समर्पण करती है ऐसी वेश्या विवेकरूपी कल्पलताको छुरीसीहै उससे कौन बुद्धिमान् रमै ॥ वेश्या तो कामाग्निकी ज्वाला है रूपरूपी इन्धनसे प्रचण्ड है कामी पुरुष उसीमें अपना धन और यौवन होम करतेहैं ॥ ८९ ॥ ९० ॥

कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ॥
चारभटचौरचेटकनटविटनिष्ठीवनशरावम् ॥ ९१ ॥

इतिकामिनीनिगर्हणम् ।

( सं० टी० ) क इति । कुलपुरुषः सन् को वा मनोज्ञं सुन्दरमपि वेश्याधरपल्लवं चुम्बति अकुलीनः चुम्बति कुलपुरुषस्तु नैव । किमिति कथंभूतं वेश्याधरपल्लवं चारो हेरः भटः भाट्टश्चौरस्तस्करः चेटकं करोति स चेटकः नटः नर्तकः विटः भाण्डः इत्यादीनां निष्ठीवनं लालोदकं त्यज्यते तस्य शरावं पात्रम् एवं निन्द्यम् ॥ ९१ ॥

( भा० टी० ) वेश्याका अधरपल्लव यदि सुन्दर है तो भी उसे कौन कुलीन पुरुष चुंबे क्योंकि ठग, ठाकुर, चोर, नट, नीच, इत्यादि और जारोंके थूकनेका ठीकरा है ॥ ९१ ॥

## अथ सुविरक्तप्रशंसा ।

धन्यास्त एव तरलायतलोचनानां
तारुण्यरूपघनपीनपयोधराणाम् ॥
क्षमोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥९२॥

( सं० टी० ) धन्या इति । त एव धन्याः येषां मनः तरलानि चपलानि आयतानि विस्तीर्णानि लोचनानि यासां तासां आकृतिं रूपं दृष्ट्वा विकृतिं न एति कथंभूतानां तारुण्यं रूपं घनौ पीनौ च पयोधरौ यासां पुनः क्षामं कृशमुदरं तस्योपरि लसन्त्यः शोभायमानाः त्रिवलयो यासाम् ॥ ९२ ॥

( भा० टी० ) चञ्चल बडे नेत्रवाली यौवनके अभिमानसे भरी दृढ और पुष्टस्तनवाली जिनके कृशोदरपर त्रिवलीलता शोभती है ऐसी स्त्रियोंकी आकृति देखकर जिन पुरुषोंके मनमें विकार नहीं उत्पन्न होता वे धन्य हैं ॥ ९२ ॥

बाले लीलामुकुलितममी सुन्दरा दृष्टिपाताः
किं क्षिप्यन्ते विरमविरम व्यर्थ एष श्रमस्ते ॥
सम्प्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः॥९३॥

( सं० टी० ) बाले इति । हे बाले त्वया लीलामुकुलितमस्पष्टं यथा स्यात्तथा अमी सुन्दराः दृष्टिपाताः किं किमर्थं क्षिप्यन्ते संप्रति अधुना ते तव एष श्रमः व्यर्थः निरर्थकः किमिति वयमन्ये पूर्वे न भवामः इदानीमस्माकं बाल्यमुपरतम् अज्ञानं गतम् वनान्ते आस्था उत्पन्ना मोहः क्षीणः इदं जगज्जालं तृणमिव आलोकयामः अतो विरम विरम विरामं प्राप्नुहि ॥ ९३ ॥

( भा० टी० ) हे बाले लीलासे किंचित् विकसित और सुन्दर कटाक्ष हमपर क्या फेंकती है विश्राम ले २ हमारे प्रति तेरा यह श्रम व्यर्थ है क्योंकि, अब हम कुछ औरही होगए लडकपन हमारा छूट गया वनमें रहते हैं मोहभी क्षीण होगया और इस जगत्के जालको तृणसमान देखते हैं ॥ ९३ ॥

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ॥
गतो मोहोऽस्माकं स्मरशबरबाणव्यतिकर-
ज्वलज्ज्वालाः शान्तास्तदपि न वराकी विरमति॥९४॥

( सं० टी० ) इयमिति । इयं बाला मां प्रति अनवरतं निरन्तरं चक्षुः क्षिपति त्यजति अनया किमभिप्रेतं मनसि किमियमिच्छति न जाने कथंभूतं चक्षुः इंदीवरं नीलोत्पलं तस्य दलस्य प्रभा कान्तिस्तां चोरयति तदस्माकं मोहो गतः स्मर एव शबरः कैवर्तकः तस्य बाणानां व्यतिकरेण अतिशयेन प्रेषितेन या ज्वलज्ज्वालास्ताः शान्ताः तदपि एवं सति इयं वाराकी मूर्खा न विरमति विरामं न प्राप्नोति ॥ ९४ ॥

( भा० टी० ) इस बाला स्त्रीका क्या अभिप्राय है जो यह कमलदलोंकी प्रभा तिरस्कार करनेवाले नेत्रोंको मेरी तरफ चलाती है अब हमारा

अज्ञान गया और कामदेवरूपी भीलके बाणोंसे उठी हुई अग्नि शांत होगयी तोभी यह मूर्खा बाला विरामको प्राप्त नहीं होती अर्थात नेत्रोंका फेंकना नहीं छोडती ॥ ९४ ॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ॥
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटितिभ्रश्यद्दिशोदृश्यताम् ९५॥

( सं० टी० ) शुभ्रमिति। शुभ्रं सद्म गृहं सविभ्रमा सविलासा युवतयस्तरुण्यः श्वेतमातपत्रं तद्वदुज्ज्वला लक्ष्मीः इति स्फीते पुष्कले शुभे कर्मणि सति स्थिरमिव अनुभूयते तदेव विच्छिन्ने जाते सति नितरामत्यन्तमनंगस्य मदनस्य कलहेन या क्रीडा तस्यां त्रुटत्तंतुकं गच्छति मुक्ताजालं झटिति शीघ्रं भ्रश्यद्दिशः भ्रश्यदेकैकं चतुर्दिशासु प्रयाति तद्वत् पूर्वो दृश्यतां पश्यताम् ॥ ९५ ॥

( भा० टी० ) उज्ज्वल घर अच्छे हावभावयुक्त स्त्रीजन और श्वेत छत्र-सहित शोभायमान लक्ष्मी तब ही स्थिरतासे भोगमें आती है जब पुण्यकी वृद्धि हो और जब पुण्यक्षय होजाता है तब देखो कामदेवकी क्रीडाके कलहसे टूटे हारके मोतियों समान भ्रष्ट हो सब भोग शीघ्रही देशांतरोंमें लुप्त होजाता है ॥ ९५ ॥

सदा योगाभ्यासव्यसनवशयोरात्ममनसो-
रविच्छिन्ना मैत्री स्फुरति यमिनस्तस्य किमु तैः ॥
प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः
सनिश्वासामोदैः सकुचकलशाश्लेषसुरतैः॥९६॥
किं कन्दर्प करं कदर्थयसि किं कोदंडझङ्कारितै
रे रे कोकिल कोमलं कलरवं किं त्वं वृथा वल्गसे॥

**मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं**
**चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते॥९७॥**

( सं० टी० ) सदेति । सदा योगाभ्यासस्य व्यसनेन वशयोः आत्मा च मनश्च आत्ममनसी तयोरविछिन्ना मैत्री स्फुरति वर्तते एवंभूतस्य यमिन इन्द्रियनिग्रहकर्तुः तस्य तैः किमु किं प्रयोजनं तैः कैः प्रियाणामालापैः अधरमधुभिः वक्त्रविधुभिः वक्त्रात् निष्कासितैः निःश्वासेन सह आमोदैः गन्धैः कुचकलशानामाश्लेषैः आलिंगनैः सह सुरतैः इत्यादिभिः किं प्रयोजनम् ॥ ९६ ॥ ९७ ॥

( भा० टी० ) जिनके आत्मा और मनकी सदा योगाभ्यासहीके व्यसनसे निरंतर मित्रता फुरती है फिर उन्हें प्रियस्त्रियोंके संभाषण, अधरामृत, श्वासोंकी सुगन्धसहित मुखचन्द्र और कुचकलशोंको हृदयसे लगाकर सुरतसे क्या प्रयोजन है ॥ अरे क्षुद्र कामदेव अपने धनुषके टंकारशब्दसे हमको क्या त्रास देता है अरे कोकिल ! कोमल मधुर शब्दसे क्या वृथा बोलता है और हे सुन्दरी ! प्रेम और चतुराईसे भरे सुन्दर मधुर चंचल कटाक्ष अब तू मत चलाव मेरा मन आस्वादित चन्द्रचूड शिवजीके चरणध्यानरूपी अमृतमें मग्न होरहा है ॥ ९६ ॥ ९७ ॥

**यदासीदज्ञानं स्मरतिमिरसंचारजनितं**
**तदा सर्वं नारीमयमिदमशेषं जगदभूत् ॥**
**इदानीमस्माकं पटुतरविवेकाञ्जनदृशां**
**समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥९८॥**
**वैराग्ये सञ्चरत्येको नीतौ भ्रमति चापरः ॥**
**शृङ्गारे रमते कश्चिद्भुवि भेदाः परस्परम् ॥९९॥**

( सं० टी० ) यदेति । यदास्माकं स्मरतिमिरे अन्धकारे संचारेण जनितमज्ञानमासीत् तदा सर्वमिदमशेषं जगन्नारीमयं नारीप्रचुरमभूत् इदानीमधुना अस्माकमतिशयेन पटुतरविवेक एव अञ्जनं तेन युक्ता दृष्टिर्येषामस्माकं दृष्टिः समीभूता समतां प्राप्ता त्रिभुवनमपि ब्रह्म मनुते मानयति इति सुतरां विरक्तः ॥ ९८ ॥ ९९ ॥

( भा० टी० ) कामदेवरूपी तिमिरसंचारसे उत्पन्न अज्ञान जबतक मुझमें था तबतक समस्त जगत् स्त्रीमय दृष्टि पडता रहा अब हमने सुन्दर विवेकरूपी अंजन लगाया है तो समदृष्टि होगई त्रैलोक्य ब्रह्ममय दीख पडता है ॥ कोई पुरुष वैराग्यमें संचार करता, कोई नीतिमें प्रवृत्त रहता और कोई शृंगारमें रमता है यों परस्पर मनुष्योंमें इच्छाका भेद है इस लिये भर्तृहरिजीका तात्पर्य यह है कि, तीनप्रकारके मनुष्योंके हेतु तीन शतक निर्माण किये हैं ॥ ९८ ॥ ९९ ॥

**यद्यस्य नास्ति रुचिरं तस्मिंस्तस्यास्पृहा मनोज्ञेऽपि ॥**
**रमणीयेऽपि सुधांशौ न मनः कामः सरोजिन्याः ॥१००॥**

( सं० टी० ) यदिति । यस्य यत् रुचिरं नास्ति तत्र मनोज्ञेपि सुन्देरऽस्यस्य स्पृहा न भवति अत्र दृष्टान्तः चंद्रस्तु सर्वेषां प्रियकरः रमणीयः तस्मिन् सूर्यविकासिन्याः सरोजिन्याः मनसः कामः प्रीतिर्नैव भवति एवं यस्य यत्र प्रीतिस्तस्य तत् रुचिरम् अतो नीतिः शृंगारश्च वैराग्यं च उक्तम् एतेषु यत्र यस्य प्रीतिस्तत्र तद्द्रष्टव्यम् । इदं शृंगारशतकं भर्तृहरिणा कृतं तत् कामबुद्ध्या न कृतम् आदावत्र आरंभे "स्मितभावैः खलु बंधनं स्त्रियः" इत्युक्तम् मध्येऽपि "दुःखैकहेतुर्नहि काश्चदस्ति" इत्यादीनि वचनानि स्थले स्थले स्थितानि तासां कामिनीनां प्रशंसा कामिभिः क्रियते सा लिखिता प्रान्ते सर्वं विवेकदृष्ट्या निन्दितम् ॥ १०० ॥

( भा० टी० ) जिस पदार्थमें जिसकी रुचि नहीं होती चाहे वह सुंदरभी हो तोभी उसे उसकी इच्छा नहीं होती क्योंकि, रमणीयचंद्रमाम कमलिनीकी इच्छा नहीं होती ॥ १०० ॥

इति शृंगारशतकं भाषाटीकासमेतं संपूर्णम् ।

श्रीः ।

# अथ भर्तृहरिकृतं--

## वैराग्यशतकम् ।



दिक्कालाद्यनवच्छिन्नाऽनन्तचिन्मात्रमूर्त्तये ॥
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥

( सं० टी० ) विश्वेशं मोक्षदातारं भैरवं भीतिनाशनम् । बुद्धिप्रदं बुद्धिराज सर्वांगैर्नौमि सादरम् ॥ १ ॥ लम्बोदरमुखं ध्यात्वा नत्वा कृष्णं सदाशिवम् ॥ वैराग्यशतकव्याख्यां यथाप्रज्ञं करोम्यहम् ॥ २ ॥ दिक्कालाद्यनवच्छिन्ना मूर्तिर्यस्य महात्मनः ॥ तस्मै कृष्णाय महते तेजोरूपाय वै नमः ॥ ३ ॥ इह खलु सकलवसुधेशशिखामणी राजर्षिप्रवरः श्रीमद्भर्तृहरिर्वैराग्यशतकमेवारभमाणो राजकुलोत्पन्नत्वात् राज्ञो नीतिशृंगारावश्यमपेक्षितत्वतः प्रथमं नीतिशृंगारशतके वैराग्यशतकावतरणरूपे निर्माय इदानीं वैराग्यशतकमेवारभमाणः स्वेष्टदेवं सदाशिवं तेजोरूपेण विशेषयन्नमति । दिगिति । अयं श्लोकस्तु नीतिशतके कृतव्याख्योप्यस्मिन् प्रकरणे मङ्गलरूपेण लिखितत्वात्किंचिद्व्याख्यायते । दिक्कालादिना अपरिच्छिन्नत्वात् एवानन्तता चिन्मात्रा चैतन्यरूपं यस्याः तादृशी मूर्तिर्देहो यस्य तस्मै नम इत्यन्वयः । कथंभूताय स्वानुभूतिः स्वानुभवः स एव मानं ज्ञापकं यस्य तस्मै शांताय निरुद्वेगाय तेजसे तेजोरूपायेति ॥ १ ॥

( भा० टी० ) दिशा और काल जिसकी मूर्तिका संकोच नहीं करसकते और जो अंतरहित और चेतनरूप है और जो अपनेही अनुभवसे जानाजाता है ऐसे शांत और तेजोरूप ब्रह्मको नमस्कार है ॥ १ ॥

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ॥
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २ ॥

( सं० टी० ) बुधा मात्सर्यसंयुक्ताः प्रभवो गर्वदूषिताः । लीनं सुभाषितं सर्वं देह एव तु नो बहिः ॥ १ ॥ महतां गुणान् महत्स्वेव लीनानालोक्य शोचन्नाह । बोद्धार इति । बोद्धारः सदसद्विवेककर्तारोऽहमेव बहुज्ञोऽल्पज्ञं किमन्यं पृच्छेयमन्यस्मिन्नल्पज्ञत्वदोषदर्शनरूपेण मात्सर्येण ग्रस्ताः सर्पेण भेका इव निगीर्णाः प्रभवः सर्वगुणग्रहणसमर्थाः मां धनादिसम्पन्नमालोक्य सर्वे एवायान्तीति स्मयेन गर्वेण दूषिता दुष्टांतःकरणा अन्ये तदतिरिक्ताः अबोधेनाज्ञानेनोपहताः हतप्राया अतः सर्वमंग एव जीर्णं लीनं न बहिरन्येषु प्रसारितमिति भावः ॥ २ ॥

( भा० टी० ) विद्याऽभिमानी लोग तो अपने मत्सरहीसे ग्रसित हैं और धनवान्लोग अपने द्रव्यके गर्वसे किसी गुणीका आदरही नहीं करते और जो हैं सो साधारण अल्पज्ञ हैं इसलिये उनसे कहनेकोभी नहीं चाहता इन कारणोंसे सुभाषित ( उत्तम काव्य ) शरीरहीमें जीर्ण होजाताहै अर्थात् कदाचित् संसारमें प्रगट नहीं होता ॥ २ ॥

**न संसारोत्पन्नं चरितमनुपश्यामि कुशलं**
**विपाकः पुण्यानां जनयति भयं मे विमृशतः ॥**
**महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया**
**महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥३॥**

( सं० टी० ) संसारजनितं वृत्तं सुखदं न कदाचन । सुखरूपं भजेत्कृष्णं यदीच्छेन्मुक्तिमात्मनः ॥ १ ॥ संसारचरितं सुखरूपं न भवतीति तत्र लुब्धान् जनान् शिक्षयन् आह । नेति । संसारः सुखरूपो जगदनेकव्यापारस्तत्र भवमनेकचरितं जनकृतं नानाकर्तव्यरूपं कुशलं दृढसुखरूपं न पश्यामि चलानां पदार्थानां फलमपि चलमेव भवतीति भावः । ननु स्वर्गादिजनकाश्वमेधादियागपुण्यानां सुखमयः स्वर्गवासः फलं श्रुतमेव कथं तेषां विपाके स्वभजनकत्वं तत्राह । विपाक इति । पुण्यानामपि कर्मणां विपाकः फलं मे मम विमृशतो विचारयतो भयं जनयति तत्र कारणमाह महद्भिः पुण्यौघैः पुण्यसमूहैः चिरकालेन परिगृहीताः सम्यग्धृता विषया महान्तोऽपि स्वरूपतः फलदानतो विषयिणां रागिणां व्यसनं दुःखमेव जनयितुमुत्पादयितुं जायन्ते उत्पद्यंते इति क्षीणे पुण्ये मर्त्यलोकं विशन्तीति भगवद्वचनाच्च ॥ ३ ॥

( भा० टी० ) सांसारिक उत्पन्न चरित्रमें हम कुशल नहीं देखते और पुण्यफल स्वर्गादिविचारसे भयदायकही देखपडता है अर्थात् पुण्य क्षय होनेपर वहांसेभी पतन होते हैं और बहुत दिनपर्यन्त पुण्यके समूहसे इस लोकमें जो विषयादि संचित किया है वहभी विषयासक्तोंको अन्तसमय दुःखदायकही है ॥ ३ ॥

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ॥
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुनामुञ्चमाम् ॥४॥

( सं० टी० ) निखनेद्वसुधां ध्मातु गिरेर्धातुं सदौषधैः ॥ निस्तरेदुदधिं यद्वा तृष्णाशान्तिस्तु कृष्णतः ॥१॥ वसुधादिखननक्रियाश्रान्तस्तत्क्रियालभ्यवस्त्विच्छानिवृत्तये तृष्णामेव प्रार्थयति । उत्खातमिति । गृहे निधिस्तिष्ठति न वेति शङ्कया क्षितेस्तलपर्यन्तमुत्खातं खनितं गिरिधातवो हरितालादयो ध्माताः अनेकौषधयोगेनाग्नौ तापिताः सरितां पतिः समुद्रोऽपि परतो रत्नादिलाभेच्छयान्तः प्रवेशतो वा निस्तीर्णः सीमालंघितः नृपतयो राजानोऽप्यनेकयत्नैरुपायैः संतोषिताः तुष्टिं प्रापिता मंत्राराधने वशीकरणे तत्परेण संलीनेन मनसा श्मशाने शवसमीपे निशाः नीता अतिक्रामिताः तासु क्रियासु वराटकोऽपि नैव संप्राप्तो लब्धोऽतो मां हे तृष्णेऽधुनैव शीघ्रं मुञ्च त्यजेति प्रार्थना ॥ ४ ॥

( भा० टी० ) द्रव्य मिलनेकी आशासे मैंने ठौर २ भूमि खोदी रसायन सिद्ध होनेके निमित्त पर्वतके अनेक धातुओंको फूंक डाली देशान्तरसे धन वा रत्नप्राप्तिके हेतु समुद्रभी मथडाला और बडे प्रयत्नसे राजाओंकोभी प्रसन्न किया और मंत्र सिद्ध करनेके निमित्त मन लगाकर निरंतर रात्रिको महाश्मशानमें बैठे जागाकिया परन्तु यथार्थ मुझे एक कौडीभी हाथ न आई अन्तकाल हे तृष्णे ! अब तो मेरा पिण्ड छोड ॥ ४ ॥

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ॥

**भुक्तं मानविवर्जितं परगृहे साशंकया काकव-**
**तृष्णे दुर्मति पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ५ ॥**

( सं० टी० ) लोभादनेकदेशेषु मनो भ्रमसि लोलुप ॥ कृष्णस्मरणसंदेशं सम्भ्रम श्रमहारिणम् ॥ १ ॥ परदेशादिगमनानेकसेवादिकरणसंतप्तः सन् तृष्णामेव निंदति । भ्रांतमिति । अनेकं बहुप्रकारं दुर्गं गंतुमशक्यं पर्वताटव्यादिना एवंभूतं देशं प्रति भ्रांतं चालितं फलं तु किंचिदल्पमपि एकमपि वा न प्राप्तं नैव लब्धं किं बहु बहुप्रकारं वा ननु देशगमनागमनमात्रं कृत्वा फलं तु कस्यचित् सेवां विना नैव भवतीत्याशंक्याह । त्यक्त्वेति जातिर्ब्रह्मक्षत्रादिः कुलं सत्कर्मादिनोत्पन्नं तत्रोचितमभिमानं नीचकर्माकरणरूपं त्यक्त्वा सेवापि कृता सापि निष्फला फलशून्या मानः निमंत्रणादिपूर्वकमाह्वानं सत्कारस्तद्रहितं यथा स्यात्तथा भुक्तं परगृहे आशङ्कया सह वर्तमानया तया बुद्ध्या भत्या वेति शेषः हे तृष्णे दुर्मत्या पापरूपं कर्म तत्र निरते निमग्ने अद्यापि पापं कर्म कारयित्वापि न संतुष्यसि अपरं किं कारयसीति भवः ॥ ५ ॥

( भा० टी० ) दुर्गम अनेक देशोंमें मैंने भ्रमण किया पर कुछ फल न प्राप्त हुआ यथार्थजाति और कुलका अभिमान त्यागकर पराई सेवा की सोभी व्यर्थ हुई अपमानसे कौवेके समान साशंकित परघर भोजन भी करता रहा हे तृष्णे ! दुर्मति और पापकर्ममें प्रवृत्त तू अबतक संतोष नहीं पकडती ॥ ५ ॥

**खलोल्लापाः सोढाः कथमपि तदाराधनपरै-**
**र्निगृह्यान्तर्बाष्पं हसितमतिशून्येन मनसा ॥**
**कृतश्चित्तस्तम्भः प्रहसितधियामञ्जलिरपि**
**त्वमाशे मोघाशे किमपरमतो नर्त्तयसि माम् ॥ ६ ॥**

( सं०टी० ) खलवाग्बाणविद्धोऽपि न तत्सेवारतो भवेत् ॥ कृष्णसेवारतो ना स्यादत्रानन्दो निराश्रयः ॥ १ ॥ तृष्णातिगुर्वी अतः प्रथमं तत्रानेकदुःखानि प्रदर्श्याशायामपि तानि दर्शयितुमाशां प्रार्थयते । खलेति । खलानां प्रतिक्षणे परच्छिद्रनिरीक्षकाणामालापाः नीचसंबुद्ध्यो रे दीन मंद इत्यादिका उच्चैराह्वानरूपाः सोढा अंगी-

कृताः कथमपि केनापि प्रकारेण तदाराधनपरैः तेषां खलानामाज्ञासंलग्नैरस्माभिरिति शेषः। तेषां कटुवचनैरुत्थितमंतर्बाष्पं श्वासस्तं निरुध्य इत्यर्थः । मां दीनमन्यं वा दृष्ट्वा प्रहसिता धैर्येणां तेषामपि चित्तस्तम्भस्तद्धारणमञ्जलिः प्रणामश्च कृतः शून्येन साररहितेन मनसा तथापि हे आशे मोघा निष्फला आशा इच्छा दिक् इति वा यस्याः सा त्वं किम परम् एतत्सर्वं कारयित्वापि खलानां पुरः मां नर्तयासि नर्तनं कारयसीति भावः ॥ ६ ॥

( भा० टी० ) खलोंकी सेवा करनेमें हमने तिनके ठट्ठे और कुतर्क वाक्य सहे हृदय नेत्र आंसुओंको रोक उनके आगे उदास मनसे हँसा- किये और चित्त स्थिर कर उन हँसनेवालोंके सन्मुख हाथभी जोडा हे तृष्णे ! व्यर्थ आशा करनेवाली अधिक अब क्या नचाती है॥६॥

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ॥
दृष्ट्वा जन्म जराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ७ ॥

( सं० टी० ) गमनागमनं कुर्वन् रविर्हरति जीवितम ॥ सेवितं यैर्हरेः पादकंजं तेषां सुजीवितम् ॥ १ ॥ जगदुन्मादं दुःखसहिष्णुतां कालज्ञानं च दर्शयति । आदित्यस्येति । आदित्यस्य गतागतैर्गमनागमनैः उदयाचलादस्ताचलं प्रति गमनमागमनं तु ततः पुनरुदयाचलं प्रति एवंप्रकारकैर्गतागतैरहरहः प्रतिदिनं जीवितमायुः क्षीयते नश्यति व्यापारैर्जगदनेकव्यवहारैः कथंभूतैः बहुकार्यभारगुरुभिः बहूनि कार्याण्येव भारा वोढुमशक्यास्तैर्गुरुभिर्महद्भिः कालो मरणं कियदायुर्गतं कियदवशिष्टमिति तु कैश्चिदपि न विज्ञायते न विशेषेणानुभूयते जन्मादिमरणांतं कर्म सर्वेषामात्मनोऽपि दृष्ट्वा स्वनेत्रगोचरीकृत्वापि त्रासो भयं नोत्पद्यते अनिष्टकरणात्कश्चिदपि न निवर्तत इति भावः । तत्र हेतुमाह पीत्वेति । मोहप्रचुरां प्रमादरूपां मदिरां पीत्वा जगद्भ्रमनशीलं उन्मत्तभूतं कर्तव्याकर्तव्यविचारशून्यं जातमिति शेषः ॥ ७ ॥

( भा० टी० ) सूर्यके उदय अस्त होनेसे दिन दिन आयु घटती जाती है अनेक कार्योंकर भारी व्यापारमें काल बीता जाना नहीं

जाता और जन्म वृद्धापन विपत्ति और मरण देखकेभी त्रास नहीं होता इससे यह निश्चित हुआ कि मोहमयी प्रमादरूपी मदिरा पीके जगत् मतवाला हो रहा है ॥ ७ ॥

दीना दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्नरैर्न विधुरा दृश्येत चेद्गेहिनी ॥
याच्ञाभङ्गभयेन गद्गदलसत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ ८ ॥

( सं० टी० ) अतिदीनिमुखैः पुत्रैर्युक्ता पत्नी कदम्बरा ॥ न भवेद्गेहिनी गेही देहीतीह कथं वदेत् ॥ १ ॥ पुत्रादिसंग्रहो विवेकिनामपि दुःखद इत्याह । दीनेति । दीनानि मुखानि येषां तैः शिशुकैर्बालैराकृष्टं जीर्णमम्बरं वस्त्रं यस्याः सा कथंभूतैः क्रोशद्भिरन्नार्थं रुदद्भिरन्यैश्च गृहनरैः क्षुधितैर्विधुरातिदुःखवती एतादृशी गेहिनी भार्या चेत् यदि न दृश्येत मनस्विना जनेनेति शेषः । याच्ञाभङ्गभयेन याञ्चा देहीति प्रार्थना तस्या भंगो नाशः न दास्यामीति दातुर्वाक्येन तद्भयेन गद्गदं सबाष्पं गलत् पतत्पदतो वर्णतो वा त्रुटयत् विलीनान्यस्पष्टान्यक्षराणि यस्मिन्वाक्ये तत्क्रियाविशेषणं वा को मनस्वी जनः धीरः वदेत् देहीति कः कथयेत् स्वजाठरानलेन दग्धस्य जठरस्यार्थे स्वोदरपूरणायेत्यर्थः । अत्र आकारप्रश्लोषः कार्योन्यथार्थभ्रंशः स्यात् ॥८॥

( भा० टी० ) दीनोंसेभी दीन है मुख जिनका ऐसे बालक जिस स्त्रीके फटे वस्त्रोंको खींचतेहों और अन्नके लिये रोतेहुये गृहके इतर मनुष्योंसे जो दुःखित हो ऐसी घरवाली ( पत्नी ) न होय तो ऐसा कौन धीर मनुष्य है जो केवल अपने उदरभरनेके लिये याञ्चा ( मांगना ) के भंग ( नाहीं ) के डरसे गदगद वाक्योंसे टूटेफूटे अक्षरोंवाली देहि इस वाणीको कहै अर्थात् स्त्रीही सब कहाती है और पूरा बंधन है ॥ ८ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ॥

**शनैर्यष्ट्योत्थानं घनतिमिररुद्धे च नयने**
**अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ ९ ॥**

( सं० टी० ) स्वीयानां मरणं दृष्ट्वा त्यक्त्वा भीतिं मृतेः पुमान् । भवसागरपाराय कृष्णचंद्रं सदा भजेत्॥ १॥ मरणभयशङ्कितं पुरुषं दूषयति निवृत्तेति निवृत्ता क्षीणा पुरुषेषु मध्ये यो बहुमानः सत्कारः सोऽपि विगलितः नष्टः पुरुषेति संसारिणं प्रति संबोधनं वा समानाः सवयसः स्वर्याताः मृताः इदानीं येऽवशिष्टाः सुहृदस्तेऽपि जीवितं समं पूर्णं येषाम् अथवा स्वजीवनतुल्यास्ते दुर्हृदस्तिष्ठंतु म्रियंतां वा तैः किमित्यर्थः आसनादुत्थानं शनैर्नवेगात्तदपि यष्ट्याश्रयेण लगुडाधारेण न स्वत इत्यर्थः । घनेन निबिडेन तिमिरेणांधकारेण रुद्धे आवृते नयने अहो आश्चर्यं तदपि सर्वेषां निधनं दृष्ट्वापि स्वस्मरणरूपोऽपायो नाशस्तस्मिन् चकितः शंकितः अहमपि मरिष्यामि किमिति भीत इति यावत् ॥ ९ ॥

( भा० टी० ) विषयभोगकी इच्छा न्यून हुई लोगोंमें अपना मानभी घटा, समानवयसवालेभी मरगये, जो इष्टमित्र थे वेभी समाप्त होनेवाले हैं अथवा अपने समान हैं आपभी लकडी टेककर उठनेलगे और आखोंमें अन्धेरी आई तो यह काया ऐसी निर्लज्ज है कि अपना मरण सुन चकित हो जाती है ॥ ९ ॥

**हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं**
**व्यालानां पशवस्तृणांकुरभुजःसृष्टाः स्थलीशायिनः॥**
**संसारार्णवलंघनक्षमधियां वृत्तिः कृता सा नृणां**
**यामन्वेषयतां प्रयांति सततं सर्वे समाप्तिं गुणाः॥१०॥**

( सं० टी० ) धात्रा तु निर्मिता सृष्टिर्जीविका न यथोचिता ॥ कृतांतं सर्वजीवानां जीविकादं हरिं भजेत् ॥ १ ॥ संसारिणां विधिकृतोत्पत्तिं तेनैव कृतां विषमां वृत्तिं पर्यालोच्य शोचन्नाह । हिंसाशून्यमिति । हिंसाशून्यं जीवबाधारहितमयत्नलभ्यमश्रमसाध्यं दधातीति धाता तेन धारकेण पोषकेण डुधाञ् धारणपोषणयोरिति स्मरणात् । व्यालानां सर्पाणां मरुद्वायुरशनं भोजनं कल्पितं विरचितम् । श्रीकृष्णं विना ब्रह्मणोपि

धारणपोषणज्ञानं सम्यक् नास्तीति सूचितम् । तृणांकुरभुजः पशवोऽप्रार्थितलभ्यभोजनाः स्थलीशायिनः अकृत्रिमा भूमिः स्थली तत्र शयनशीलाः संसाररूपोर्णवः समुद्रस्तल्लंघने क्षमा समर्था धीर्येषां तेषां नृणां सा वृत्तिः कृता रचिता यामन्वेषयतां संपादयतां सर्वे गुणा अन्वेषणादयः समाप्तिं विरामं यान्ति वृत्तयो न स्थिरा भवंतीति भावः ॥ १० ॥

( भा० टी० ) विधाताने हिंसारहित विना प्रयत्न घर बैठे वायु भोजन सर्पोंके लिये जीविका बनाई और पशु ऐसे बनाये जो तृणोंको खाते हैं और भूमिपर सोते हैं और जिनकी बुद्धि संसाररूपी समुद्र लांघनेको समर्थ है उन मनुष्योंकी वृत्ति ऐसी बनाई कि जिसके खोजमें सब गुण समाप्त होजायँ पर वह न सिद्ध होय ॥ १० ॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ॥
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ११ ॥

( सं० टी० ) हरेर्ध्यानं सदा कार्यं जगतो नाशहेतवे ॥ नार्यादिविषयासक्तो न नयेत्कालमात्मनः ॥ १ ॥ उभयलोकसुखसाधनहीनं जनं निंदत्यात्मनिदर्शनमिषेण । नेति । ईश्वरस्य सर्वनियन्तुः पदं चरणं जातावेकवचनं विधिवद्विधौ पूजाप्रकारे यो विधिर्नियमस्तेन न ध्यातम् अन्यथा उदरभरणनिमित्तं मरणपर्यंतं कपटेन ध्यातमेवेत्यर्थः । किमर्थमित्याशंक्य तद्दर्शयति । संसारस्य जननमरणप्रवाहरूपस्य विच्छित्तये उन्मूलनाय मुक्तिसाधनहीनत्वं प्रदर्श्य स्वर्गादिसुखसाधनहीनत्वं दर्शयति । स्वर्गद्वारकपाटव दुरितं वर्तमानजन्मन्यन्यजन्मनि कृतं वा तस्य पाटनमुन्मूलनं पुण्यकर्मप्रायश्चित्तादि जीवाभयदानादिरूपो यो धर्मः सोपि नोपार्जितः उद्यम्य न गृहीतः । जगतः स्थूलसुखादपि हीनत्वं दर्शयति । नार्याः पीनयोरतिपुष्टयोः पयोधरयोः स्तनयोर्युगलं तादृशयोरूर्वोश्च युगलं द्वयं स्वप्नेपि नालिंगितं स्वांगैर्नाश्लिषितं मातुर्यौवनमेव वनं तच्छेदने दूरीकरणे कुठाराः छेदनशस्त्राणि केवलं नैवान्यत्किंचित्कृतमिति भावः ॥ ११ ॥

(भा० टी०) संसारछेदनेके लिये ईश्वरके चरणकमलोंका विधिवत् ध्यान न किया स्वर्गद्वार खुलनेके लिये कोई निपुण धर्मभी संचय न किया और नारीके पुष्ट पयोधर और दोनों जंघा स्वप्नमेंभी छातीसे न लगाये केवल हम माताके यौवनरूपी वन काटनेके हेतु कुल्हाडेही उत्पन्न हुये ११

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः ॥
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ १२ ॥

(सं० टी०) भोगादयस्तु नैवाप्तास्तैः प्राप्तं निधनं खलु ॥ तृष्णा जीर्णा न मेऽहं तु जीर्णः कृष्णं कथं भजे ॥ १ ॥ भोगा इति । भोगाः स्रगादयो नैव भुक्ताः किं तु तैस्तदभिलाषैर्वयमेव भुक्ताः कालो न यातो वयमेव याताः यस्मिन्काले यत्कर्म कर्तुमुचितं तत्कर्मविहीनो यातः गतः कालस्तु भगवद्विभूतित्वात् वर्तत एव एवं सर्वत्रो-हनीयं तपःकृच्छ्रादि स्वधर्माचरणं वा ॥ १२ ॥

(भा० टी०) विषयोंको हमने नहीं भोगा किन्तु विषयोंने हमाराही भुगतान कर दिया, हमने तप न तपे पर तपहीने हमें तपा डाला, काल व्यतीत न हुआ परंतु वयस हमारी बीत गई और तृष्णा पुरानी न हुई परंतु हमही पुराने होगये ॥ १२ ॥

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनाः क्लेशान्न तप्तं तपः ॥
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैःफलैर्वंचितम् ॥१३॥

(सं० टी०) क्षमादिसाधनैर्युक्तैस्त्यक्ता न गृहसंपदः ॥ मुन्युक्ते कर्मणां पाके लुब्धैः कृष्णो न सेवितः ॥ १ ॥ क्षान्तमिति । गृहे यदुचितं भोजनादि सुखं तत्क्ष-मया न क्षान्तं किन्तु रोगादिपरवशेन संतोषादलंबुद्ध्या त्यक्तमपि न शीतादयः

सोढाः तपनोऽग्निः दारिद्र्यभावेन क्लेशात् शास्त्रीयं तपः इज्याग्न्यादिरूपं तु न तप्तम् अहर्निशं वित्तं ध्यातं प्राणायामैः शंभोः शिवस्य पदं न ध्यातम् । तत्तत्कर्म तादृशं कर्म कृतं तत्तत्फलैस्तेषां तेषां कर्मणां फलैर्मुनिभिः कर्मोपदेष्टृभिः निश्चितं वंचितं लघूकृत-मित्यर्थः ॥ १३ ॥

( भा० टी० ) क्षमा तो हमने की परन्तु धर्म्म विचारके न की अर्थात् अशक्ततासे की, गृहसुख तो छोडा परन्तु संतोष पकडके न छोडा, शीतोष्ण वायूका दुःसह दुःख सहा पर तप न किया, धनका ध्यान करते रहे परन्तु संयमसे कल्याणदाता शिवजीके चरण न ध्याये, हमने वे कर्म किये जिनको विचारवाले मुनियोंने वंचक ठग कहा है ॥ १३ ॥

**वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ॥**
**गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥**

( सं० टी० ) दुर्वर्णं वदनं वाल्पकेशैः शुक्लैः शिरोऽङ्कितम् ॥ गात्रं तु शिथिलं सर्वं तृष्णा तारुण्यमेत्यहो ॥ १ ॥ जरया ग्रस्तदेहस्य शिथिलाङ्घ्रिकराक्रिया ॥ शिथिलं धीन्द्रियं शान्तं न स्वान्तं विषयाध्वनः ॥ २ वार्धक्येऽपि तृष्णाधिक्यं भव-तीति दर्शयति । वलीति । वलिभिर्मांसलताभिःआक्रान्तं व्याप्तं पलितैः शितकेशैः शिरः अङ्कितं चिह्नितं गात्राणि करचरणाद्यवयवाः स्वक्रियासु कुण्ठिता भवन्ति परंतु तृष्णा या एका मुख्या सा तु तरुणायते तारुण्यमिवाचरति ॥ १४ ॥

( भा० टी० ) मुहके चमडे सिकुडगये सिरके बाल धवल होगये और सब अङ्ग शिथिल होगये पर एक तृष्णाही तरुण होती जाती है ॥ १४ ॥

**येनैवाम्बरखंडेन संवीतो निशि चन्द्रमाः ॥**
**तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १५ ॥**

( सं० टी० ) महत्सु दुर्गतिं दृष्ट्वा स्वस्मिन्प्राप्तां न दूषयेत् ॥ इति शिक्षा कृता सद्भिः पद्येऽस्मिन्विमलाशयैः ॥१॥ येनेति । येनैव अम्बरखण्डेनाल्पाभ्रेण निशि चन्द्रमाः संवीतो वेष्टितस्तेनैव न वस्त्वंतरेण दिवा भानुरपि । एतयोरपि तदा दौर्गत्यं दैन्यं तदा किं स्वस्मिन्निति भावः ॥ १५ ॥

( भा० टी० ) जिस आकाशके खण्डको ओढकर रात्रिको चन्द्रमा व्यतीत करता है उसीको ओढकर दिनको सूर्य्य व्यतीत करता है देखो यह दोनों इस भ्रमणमें कैसी दुर्दशाको प्राप्त होते हैं पर कुछ फलभी नहीं प्राप्त करते ॥ १५ ॥

**अवश्यं यातारश्चिरतरमुषित्वापि विषया**
**वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ॥**
**व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः**
**स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १६ ॥**

( सं०टी० ) गच्छतो वस्तुनः स्वाङ्गे महत्सौख्यं प्रदर्शितम् ॥ स्वेच्छया गमनं तस्य हृत्तापं विदधद्व्रजेत् ॥ १ ॥ अवश्यमिति । चिरतरं बहुकालमुषित्वा वासं कृत्वा एते प्रसिद्धा विषयाः हि निश्चितं यातारोऽवश्यं ध्रुवं यास्यन्ति तदा वियोगे विश्लेषे को भेदो यद्येन भेदेन जनो भोक्ता यतः अमून् विषयान्न त्यजति ननु गमनशीलत्वात् स्वयमेव यास्यन्ति को लाभस्तत्त्यागे इत्याशंक्य स्वयं त्यागे सुखं स्वेच्छागमनेन दुःखं च दर्शयति स्वेच्छया व्रजन्तो विषया मनसः परितः सर्वतस्तापाय भवन्ति स्वयं त्यक्ताः सन्तः शमं शान्तिं सुखम् अत एवानन्तमपरिच्छिन्नं विदधति कुर्वन्ति ॥ १६ ॥

( भा० टी० ) बहुतकालपर्यन्त भोग कियेहुए विषय अन्तमें अवश्य छूटेंगे फिर उनके वियोग होनेमें क्या संशय रहा जिसे यह मनुष्य पहिले आपही क्यों न त्यागदे क्योंकि जब वे आपसे छोडेंगे तो मनको बडा संताप देंगे और जो आपसे छोडे जांयगे तो महासुखको प्राप्त होगा ॥ १६ ॥

## तृष्णाधिकारमाह ।

**विवेकव्याकोशे विदधति शमे शाम्यति तृषा**
**परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ॥**
**जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपण-**
**स्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १७ ॥**

( सं० टी० ) विवेकेति । तृषा तृष्णा शमे उपशमे सति शाम्यति उपशमं गच्छति क सति विवेकस्य व्याकोशे विकाशे सति सा परिणतिः तृष्णापरिणामः तुङ्गे परिष्वंगे आश्लेषे सति प्रसरति युक्तोऽयमर्थः अपरापि या विलासिनी भवति सा तुङ्गे परिष्वंगे सति प्रसरतितरां न तु व्याप्तिं भजेत् लब्धावकाशत्वात् तथा सा तृष्णापि मरुतां देवानामप्यधिपतिः इन्द्रः यस्यां तृष्णायां तृषापात्रं भवति तुंगे परिष्वंगे च्छेतुमशक्तो भवति इत्यर्थः । मनुजानां तु का कथा किंविशिष्टो मरुतामधिपतिः जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणः जराजीर्णम् ऐश्वर्यं तस्य ग्रसनेन यद्गहनं तस्य आक्षेपे कृपणः विध्वंसे असमर्थः अतः कारणात् तृष्णा गरीयसी ॥ १७ ॥

( भा० टी० ) जब विवेकके प्रकाशसे शांतिका उदय होता है तब तृष्णाभी शांत होजाती है और ऊँचे विषयके संसर्गसे वही तृष्णा ऐसी फैलजाती है जिसके होते जरासे जीर्ण ऐश्वर्यके कठोर त्यागनेमें इंद्रभी असमर्थ होताहै अर्थात् महान् पदवीवाला इंद्रभी तृष्णाको नहीं त्यागसकता ॥ १७ ॥

## मदनविडंबनमाह ।

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ॥
क्षुधाक्षामो जीर्णः पिठरजकपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥ १८ ॥

( सं० टी० ) कृश इति । श्वा कुक्कुरः शुनीमन्वेति किंविशिष्टः श्वा कृशो दुर्बलः काण एकदृक् खञ्जो भग्नपादः श्रवणरहितः छिन्नकर्णः पुच्छविकलो लांगूलरहितः व्रणी पिटकव्याप्तः पूतिक्लिन्नः पूयरंधितः पुनः किंभूतः श्वा कृमिकुलशतैरावृततनुः पुनः किंभूतः श्वा क्षुधाक्षामः पुनः किंभूतः श्वा पिठरजकपालार्पितगलः करण्डमुण्डसमर्पितमुखः एवंविधो मर्तुकामोऽपि श्वा शुनीमन्वेति तदपि मदन एव निश्चयेन हतमपि हन्ति ॥ १८ ॥

(भा० टी०) दुर्बल काना लँगडा और जिसके कान पूंछ कटेहैं और घाव हो रहा पीव बहती देहमें कीडे पडेहैं भूँखा बूढा जिसके फूटी हांडीका घेरा गलेमें फँसरहा है ऐसा कुत्ताभी कुत्तियोंके पीछे संगम करनेको लगा चला जाता है तो देखो मृतककोभी कामदेव मारता है भाव यह कि हृष्ट पुष्ट देहधारी फिर कामसे कैसे बचेंगे॥ १८॥

## विषयाणामधिकारमाह ।

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ॥
वस्त्रं च जीर्णशतखण्डमलीनकन्था
हा हा तथापि विषया न परित्यजन्ति ॥ १९ ॥

(सं० टी०) भिक्षेति । हा हा इति खेदे । विषयास्तथापि न परित्यजन्ति सामीप्यं न मुञ्चन्ति न तथापीति किं भिक्षाशनं तदपि नीरसं रसरहितं तदप्येकवारं चान्यच्छय्या च भूः अन्यच्च परिजनो निजदेहमात्रं चान्यत् वस्त्रं जीर्णं शतखण्डमपि मलीनकंथा तथापि विषया दुराशया विषोपमा यान्ति प्राणिनम् ॥ १९ ॥

(भा० टी०) नीरस अन्न एक ही बेर भीख मांगके खाते हैं भूमि हीपर सोतेहैं कुटुंबभी उनका देहहीमात्र है पुराने वस्त्र सैकडों टुकडे-कीसी गुदडी पहिने ऐसी. दशामें प्राप्त हैं तोभी बडा आश्चर्य है कि, उन्हें विषयवासना नहीं परित्याग करती ॥ १९ ॥

## रूपतिरस्कारमाह ।

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशांकेन तुलितम् ॥
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघन-
महो निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ २० ॥

( सं० टी० ) स्तनाविति । अहो इति दुःखे । निंद्यं रूपं कविजनविशेषैर्गुरु कृतं कथं निंद्यं स्तनौ मांसग्रंथी परामित्युपमितौ उपमानितौ इति किं कनककलशौ चान्यत् मुखं श्लेष्मागारं तदपि च शशांकेन तुलितं चन्द्रमसा समानं कृतं जघनं स्रवन्मूत्राक्लिन्नं तथापि करिवरकरस्पार्धि गजेन्द्रशुण्डादण्डेन स्पर्धाकारकम् ॥ २० ॥

( भा० टी० ) स्त्रियोंके स्तन मांसके लोंदे हैं उन्हें स्वर्ण कलशकी उपमा देतेहैं मुख थूक खकारका गृह है उसे चन्द्रमाकी सम कहतेहैं और टपकतेहुए मूत्रसे भीगी जांघोंको गजश्रेष्ठके शुण्डसमान कहते हैं तो देखो कि, वारंवार निन्दायोग्य स्त्रियोंका रूप है उसे कवियोंने कैसा बढाया है ॥ २० ॥

अजानन्माहात्म्यं पततु शलभो दीपदहने
स मीनोप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ॥
विजानन्तोऽप्येते वयमिह विपज्जालजटिला-
न्न मुञ्चामः कामानहह गहनो मोहमहिमा॥२१॥

( सं० टी० ) अजानन्निति । अहह खेदे मोहमहिमा गहनो वर्त्तते यत्तु शलभः पतङ्गः दीपशिखायां पततु शलभः किं कुर्वन्माहात्म्यम् अजानन् स मीनो मत्स्यः अज्ञानान्मौढ्यात् बडिशयुतं पिशितं मांसम् अश्नातु भक्षतु इह अस्मिन् संसारे एते वयं विजानन्तोऽपि कामान्न मुञ्चामः कथम्भूतान् कामान् विपज्जालजटिलान् विपदां जालो विपज्जालः तेन जटिलास्तान् अत एव मोहमहिमा गरीयान् ॥ २१ ॥

( भा० टी० ) देखो पतंग दीपककी अग्निमें आय गिरता है पर यह नहीं जानता कि, मैं नष्ट हूंगा मछली जो कटियाका मांस निकलजाती है वह भी नहीं जानती कि, इससे मेरे प्राण जायंगे पर हम लोगोंको देखो कि, जान बूझके दुखदाई विषयोंकी अभिलाषा नहीं छोडते यह महामोहकी महिमा अति कठिन है ॥ २१ ॥

## अथ दुर्जनमुद्दिश्याह ।

बिसमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठे वल्कले वाससी च ॥
नवधनमधुपानभ्रान्तसर्वेन्द्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥२२॥

( सं० टी० ) अहं दुर्जनानां पिशुनानामविनयमनुमंतुम् अङ्गीकर्तुं नोत्सहे नोत्साहं कुर्वे कथम्भूतानां दुर्जनानां नवधनमधुपानभ्रांतसर्वेन्द्रियाणां नवं नवीनोपार्जितं धनं नवधनं तदेव मधुपानं मदिरापानं तेन मधुपानेन भ्रांतानि सर्वाणींद्रियाणि येषां ते नवधनमधुपानभ्रांतसर्वेंद्रियास्तेषाम् अलमत्यर्थम् अशनाय भोजनाय बिसं कमलिनी कन्दं चान्यत् स्वादु पानाय तोयं चान्यदवनिपृष्ठे शयनं चान्यद्वाससी वल्कलचीरम् ॥ २२ ॥

( भा० टी० ) बहुतसे फल भोजनके लिये मधुर जल पीनेको पृथ्वी सोनेको और वृक्षके बकले पहिरनेके निमित्त हैं फिर थोडासा धनरूपी मदिरापानवाले जिनकी सब इन्द्रियाँ घूमती हैं ऐसे दुर्जनोंका निरादर हम क्यों सहें ॥ २२ ॥

## मानितामुद्दिश्याह ।

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ॥
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एव मदज्वरः ॥२३॥

( सं० टी० ) विपुलेति । पुंसां पुरुषाणां क एष मदज्वरः क्व सति कतिपयपुरस्वाम्ये सति धन्यैः कैश्चित्पुरा पूर्वं जगज्जनितं जगत्सृष्टं कथंभूतैर्धन्यैर्विपुलहृदयैः बृहद्धृदयैः अपरैः कैश्चिदपि विधृतं निजभुजाभ्यां धारितम् अन्यैः कैश्चिदपि पुरुषैः

न्यद्दत्तं किं कृत्वा विजित्य । यथाशब्द इवार्थे वर्तते । जगत्किमिव तृणमिव यथ तृणमनायासेन दीयते यथा जगद्विजित्य दत्तं हि निश्चितम् इहास्मिन् जीवलोके अन्य धीराश्चतुर्दश भुवनानि भुञ्जते तथा स्वल्पस्वाम्ये कोऽयं गर्वः ॥ २३ ॥

( भा० टी० ) कोई महात्मा ऐसे भये जिन्होंने जगत्को उत्पन्न किया कोई ऐसे हुए कि जिन्होंने धारण किया कोई ऐसे हुए जिन्होंने इसे जीतकर तुच्छ समुझ औरांको देदिया और कोई ऐसे हैं कि चौदह भुवनोंको पालतेहैं अब यहाँ देखो कि थोडेसे गाँवकी ठकुराई पाकर जो अभिमानका ज्वर लोगोंको होताहै वह क्या ॥ २३ ॥

## निःस्पृहाणामधिकारमाह ।

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वान्ति नः ॥
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः२४

( सं० टी० ) त्वमिति । हे नरेन्द्र ! त्वं राजा वर्त्तसे वयमपि उपासितगुरुप्रज्ञाभिमानोन्नता वर्तामहे राजेन्द्र । त्वं विभवैः ख्यातः नः अस्माकं यशांसि महत्त्वानि कवयः कवीश्वरा दिक्षु प्रतन्वन्ति दशस्वपि दिशासु विस्तारयंति । हे मानद मानं ददाति मानदः दो अवखण्डने इति धातुः हेमानखण्डन आवयोरुभयोरपि अंतरं नातिदूरे । राजेन्द्र यदि च त्वम् अस्मासु पराङ्मुखोऽसि अनादरोऽसि तदा वयमपि एकांततो निःस्पृहा वर्तामहे त्वय्यनादरात्त्वयि विषये अनादराः ॥ २४ ॥

( भा० टी० ) तूं राजा है तो मैं भी गुरुकी सेवा कर बुद्धिमान् हो उच्चपदको प्राप्त हुआ हूं तूं यदि धनसे प्रसिद्ध है तो हमारी विद्याका यश कविलोग देशान्तरमें वर्णन कर रहे हैं फिर तूं हमसे मुख फेरता है तो हम तुमसे अधिक निःस्पृह हैं ॥ २४ ॥

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-
र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ॥

तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्त्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ २५ ॥

( सं०टी० ) अभुक्तायामिति । जडा मूर्खा विषादे कर्तव्ये प्रत्युत सम्मुखं मुदं विदधति कथं क्षितिभुजां राज्ञां तस्या भुवः पृथिव्या लाभे क इव बहुमानः यस्यां पृथिव्याम् अभुक्तायां सत्यां नृपशतैर्नरेन्द्रसहस्रैः क्षणमपि न यातं न गतं तदंशस्याप्यंशे तस्याः पृथिव्या विभागस्यापि विभागे तदवयवलेशे तस्यांशस्यापि लेशेपि पतयः स्वामिनः ॥ २९ ॥

( भा० टी० ) सैंकडों राजा इस पृथ्वीको अपनी २ मान चले गए पर उनसे यह भोगी न गई तो इसके लाभ होनेसे राजोंको क्या अभिमान करना चाहिये अब तो उसके टुकडांका टुकडा फिर तिसका टुकडा उससेभी न्यून अंश पाके अपनेको भूपति मानते हैं तो जो बात सोचकरनेको योग्य है उसमें मूर्खलोग देखो उलटा आनंदही मानते हैं यह आश्चर्य है ॥ २५ ॥

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं न त्वणु-
रङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते ॥
तद्दद्युर्ददतेऽथ वा न किमपि क्षुद्रा दरिद्रा भृशं
धिग्धिक्तान्पुरुषाधमान्धनकणं वांछंति तेभ्योऽपिये॥२६॥

( सं० टी० ) मृदिति । तान् पुरुषाधमान् धिक् धिक् येऽधुना तेभ्योपि धनकणं वाञ्छन्ति कथमयं मृत्पिण्डः पृथ्वीचयः सर्वोऽपि जलरेखया वलयितः सन्न तु अणुः स्वल्पप्रमाणः तु पुनः स एव मृत्पिण्डः राज्ञां गणैर्भुज्यते किं कृत्वा संयुगशतैः संग्रामविभागीकृत्य रणे शनैः अंगीकृत्य ते क्षुद्रा दरिद्रा राजानः भृशमत्यर्थं किमपि न दद्युः अथवा न ददते तानेव पुरुषान् धिक्धिक् ये तेभ्योऽपि वाञ्छां कुर्वन्ति २६

( भा० टी० ) यह भूमि एक मिट्टीका लोंदा पानीकी रेखासे घिरा हुआ है पहिले आपही यह सम्पूर्ण छोटासा है तिसे राजा सैंकडों लडाइयाँ लडलडकर अपना अपना भाग बाँटके किसीप्रकारसे भोगते हैं

ऐसे क्षुद्र और दरिद्रको जो बडे दानी कहाते हैं अबभी देखें दान करते हैं या नहीं यों कह कहके उनसे धनके कणिकाकी वांछा करते हैं तिन अधम पुरुषोंको धिक्कार है ॥ २६ ॥

## दुर्भगसेवकस्य वाक्यमाह ।

न नटा न विटा न गायना न परद्रोहनिबद्धबुद्धयः ।
नृपसद्मनि नाम के वयं कुचभारानमिता न योषितः ॥

( सं० टी० ) नेति । नामेति संबोधने । नृपसद्मनि वयं के वयं नटाः नृत्यकृत्या निविष्टाः उत्तीर्णाः न गायना न परद्रोहनिबद्धबुद्धयः परद्रोहे निबद्धा बुद्धयो येषां ते परद्रोहनिबद्धबुद्धयः वयं योषितोऽपि न किं योषितः कुचभारानमिताः कुचभारेणासमंताद्भावेन नमिताः एवंविधा अपि न ॥ २७ ॥

( भा० टी० ) न तो हम नट हैं, न परस्त्रियोंसे लम्पट हैं, न गवैये हैं, न झूठे लबार हैं और न बडे २ स्तनवाली स्त्रियें हैं फिर हमको राजोंके घर कौन पूछता है ॥ २७ ॥

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ॥
इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखा-
नहो कष्टं सापि प्रतिदिनमधोधः प्रविशति ॥ २८ ॥

( सं० टी० ) पुरेति । पुरा पूर्वम् उपशमवतां विद्वत्ता वैदुष्यं क्लेशहतये संसारनिवारणायासीत् असौ विद्वत्ता कालेन गता विषयिणां विषयसुखसिद्ध्यै गता अहो इति खेदे कष्टं विलोक्य इदानीं सापि विद्वत्ता प्रतिदिनं दिनं प्रति अधोऽधः प्रविशति किं कृत्वा शास्त्रविमुखान् क्षितितलभुजः प्रेक्ष्य निरीक्ष्य ॥ २८ ॥

( भा० टी० ) पहिले जो विद्या पण्डितोंके चित्तको क्लेश दूरकरनेके निमित्त थी फिर कुछ दिन परे वह विषयी लोगोंके विषयसुखके सिद्ध होनेके लिये भई अर्थात् विद्यासे राजाको प्रसन्न करके धन आदि ले सुख

भोगकरना इस कामकी हुई इस समयमें राजोंको शास्त्र सुननेसे विमुख देखकर प्रतिदिन वह विद्या अधोगतिको प्राप्त होती जाती है यह बडा कष्ट है ॥ २८ ॥

## साहङ्कारं पुरुषमुद्दिश्याह ।

स जातः कोप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलंकारविषये ॥
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ २९ ॥

( सं० टी० ) स जात इति । कोऽपि पुरुष आसीत् यस्य पुरुषस्य कपालमुच्चैर्यथा भवति मदनरिपोर्महेशस्य मूर्ध्नि मस्तके अलंकारविषये विनिहितं कथंभूतं कपालम् उज्ज्वलम् अधुना इदानीं कैश्चित् नमद्भिः पुंभिः पुंसां पुरुषाणां कोऽयमतुलदर्पज्वरभरः कथंभूतैर्नृभिः प्राणत्राणप्रवणमतिभिः प्राणस्य त्राणं तत्र प्रवणा मतिर्येषां ते प्राणत्राणप्रवणमतयस्तैः ॥ २९ ॥

( भा० टी० ) पहिले तो ऐसे पुरुष हुए हैं कि, जिनके उज्ज्वलमस्तककी माला बनाकर शिवजीने धारण की कि जिससे कंठका भूषण हो अब देखो अपने प्राणपोषण करनेवाले थोडेसे मनुष्योंसे प्रतिष्ठा पाकर कैसे अभिमानके ज्वरसे भारी होरहे हैं ॥ २९ ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः ॥
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न चैतत्त्वयि मम सुतरामेष राजन्गतोस्मि ३०॥

( सं० टी० ) यतिः राजानं प्रति वदति । अर्थानामिति । हे राजन् ! त्वमर्थानामीशिषे समर्थो भवसि वयमपि गिरां वाणीनामीश्महे समर्था भवामः चान्यच्च यावदित्थं अमुना प्रकारेण च शूरोऽसि अस्माकमपि वादिदर्पज्वरशमनविधौ वादिनां

दर्प्पः अहङ्कारस्तस्य ज्वरस्तस्य शमनविधौ अक्षयं निश्चलं पाटवं वर्तते हे राजन्! त्वां बुधाः सेवंते मामपि श्रोतुकामाः श्रोतारः सेवंते किमर्थं मतिमलहतये बुद्धिकालुष्यनाशाय अधुना मयि ते तव आस्था नैव चेत्तर्हि ममापि त्वयि सुतराम् आस्था नास्ति हे राजन्! एष अहं गतोस्मि ॥ ३० ॥

(भा० टी०) तुम धनके कोशके ईश्वर हो तो हमभी विद्याके कोशके ईश्वर हैं तुम युद्ध करनेमें वीर हो तौ हमभी शास्त्रार्थकरनेवाले वादी प्रतिवादियोंके अभिमानका ज्वर तोडनेमें कुशल हैं तुम्हें बडे लोग धनान्ध अथवा धन चाहनेवाले आशाग्रसित सेवन करते हैं तो हमेंभी अपने बुद्धिका अज्ञान दूर करनेको शास्त्र सुननेकी इच्छावाले सेवते हैं तो राजन् यदि हमारे विषय तुम्हारी श्रद्धा नहीं है तो हमारी तुममें नहीं है लो अब हम जाते हैं ॥ ३० ॥

यदा किंचिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ॥
यदा किंचित्किंचिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ३१ ॥

(सं० टी०) यदेति । अहं यदा यस्मिन् प्रस्तावे मदान्धः द्विप इव हस्तीव समभवम् किंचिज्ज्ञः किंचिज्जानाति किंचिज्ज्ञः। यत्तदोर्नित्यः सम्बन्धः। तदा मम मनः इति अवलिप्तमभवत्। इतीति किम् अहं सर्वज्ञोऽस्मि यदा यस्मिन् प्रस्तावे बुधजनसकाशात् पण्डितवर्गात् किंचित्किंचित् अवगतं ज्ञातं तदा इति अनेन प्रकारेण मे मम मदो व्यपगतो दूरीभूतः इतीति किम् अहं मूर्खोऽस्मि इति मदः क इव ज्वर इव यथा कस्यापि ज्वरो याति तथा मे मम अहंकारो यातः ॥ ३१ ॥

(भा० टी०) जब मैं कुछ थोडासा जानता था तब हाथीके समान मुझे मद था और मेरे मनमें यह थी कि, मैं सर्वज्ञ हूं और जब मैंने पंडितोंके सकाशसे कुछ २ जाना तब मैंने जाना कि, मैं मूर्ख हूं और मेरा मद ऐसा नष्ट होगया जैसा ज्वर ॥ ३१ ॥

## निर्ममतास्वरूपमाह ।

अतिक्रान्तः कालो लटभललनाभोगसुभगो
भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ ॥
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः
सुतारैः फूत्कारैः शिवशिवशिवेति प्रतनुमः ॥ ३२ ॥

( सं०टी० ) अतीति । हे बाले ! लटभललनाभोगसुभगः कालोऽतिक्रान्तः अतिचक्राम सम्पूर्णीकृताः लटभाः आप्तलावण्या या ललनास्तासां भोगेन सुभगो मनोज्ञः लटभललनाभोगसुभग इहास्मिन् मर्त्यलोके संसारसुरणौ सुचिरं भ्रमन्तः श्रान्ताः स्मः इदानीं स्वःसिन्धोः स्वर्गंगायास्तटभुवि कच्छस्थलीषु शिवशिव शिवेति प्रतनुमः विस्तारयामः कथंभूता वयं सुतारैः फूत्कारैः समाक्रन्दनगिरः हे बाले ! त्वं कासि तव मुखं न विलोकयामः ॥ ३२ ॥

( भा० टी० ) भूषण आदिसे शोभित जो स्त्री उनके भोगनेमें सुभग ( योग्य ) यौवन ( समय ) तो बीतगया और चिरकालतक इस संसारके मार्गमें भ्रमते २ हम थकगये अब तो श्रीगङ्गाजीके तटकी भूमिपर उक्त स्त्रियोंकी निंदा करते हुए हम शिव ३ यह जप करेंगे ॥ ३२ ॥

माने म्लायिनि खण्डिते च वसुनि व्यर्थं प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ॥
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ ३३ ॥

( सं० टी० ) मान इति । सुधियां पुरुषाणां केवलमेतदेव युक्तम् यत् क्वचित् जह्नुकन्यापयः पूतग्रावगिरींद्रकन्दरदरीकुञ्जे निवासः जह्नुकन्यायाः गंगायाः पयसा पूताः पवित्रा ये ग्रावाणस्तेषामसौ गिरीन्द्रः पर्वतस्तस्य कन्दरस्य विवरस्य या दरी गुहा तस्या निकुंजस्तस्मिन् निवासो वरम् । क सति माने म्लायिनि चान्यद्वसुनि खण्डिते

सति चान्यदर्थिनि याचके व्यर्थं प्रयाते सति चान्यत् क सति बन्धुजने क्षीणे सति पुनः क सति परिजने गते सति पुनः क सति यौवने नष्टे सति सदा वनवास एव रुचिरः ॥ ३३ ॥

( भा० टी० ) अब प्रतिष्ठा भंग हुई, द्रव्य नाश होगया, याचकलोग आय २ विमुख फिर जाने लगे, भ्राता स्त्री पुत्र और सम्बन्धी आदि नष्ट होगये उस समय बुद्धिमान् पुरुषोंको उचित है कि, जिस पर्वतके पाषाण गंगाजलसे पवित्र हैं उसकी कन्दराके समीप दरी और कुंजमें कहीं निवास करैं ॥ ३३ ॥

परेषां चेतांसि प्रतिदिवसमाराध्य बहु हा
प्रसादं किं नेतुं विशसि हृदय क्लेशकलितम् ॥
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे
विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ ३४ ॥

( सं० टी० ) परेषामिति । हा इति खेदे त्वं हृदय बहु प्रसादं किं नेतुं ग्रहीतुं विशसि किं कृत्वा परेषां चेतांसि प्रतिदिवसम् आराध्य कीदृशं प्रसादं क्लेशकलितं कष्टमलिनं हे हृदय त्वयि अन्तर्मध्ये प्रसन्ने सति अभिलषितं वाञ्छितं ते तव न पुष्यति किं त्वयि स्वयमुदितचिन्तामणिगुणे किं विमुक्तः संकल्पः ॥ ३४ ॥

( भा० टी० ) हे मन ! तू पराये चित्तमें प्रसन्न करनेको क्या प्रसाद लेनेके हेतु क्लेशसे मलिन होता हुआ घुसता है तू सर्व संकल्प अर्थात् तृष्णा छोडकर अपनेहीमें प्रसन्न होकर चिन्तामणिकेसे गुण प्रगट करेगा अर्थात् शांति सन्तोषादि गुण ग्रहण करेगा तो क्या तेरी अभिलाषा पूरी न होगी ॥ ३४ ॥

## अथ भोगपद्धतिः ।

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयम् ॥
मौने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ॥

शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम्॥३५॥

( सं० टी० ) भोग इति । स्रक्चन्दनवनितादिभोगे रोगात् भयं भीतिः स्रक्चन्दनादिशीतेन वातोत्पत्तिर्भवति स्त्रीभोगेन बलहानिर्भवति कुले च्युतिभयदोषः "कस्य दोषः कुले नास्ति" इति न्यायेन बहुकुलं यत्र तदा दोषो भवत्येव दोषेण पतति च्युतं भवति अथवा मरणेन कुलक्षयो भवति वित्ते नृपालात् राज्ञः सकाशाद्भयं भवति मौने मौनवृत्त्यांम् अथवा न किंचिद्ददाति न याचते तस्य को वा ददाति अतो दैन्यं भवति बले अतिबलिष्ठे रिपुभयं भवति रूपे सौंदर्ये जराया वार्द्धक्येन विरूपता जायते शास्त्रे शास्त्रपठने वादिनां भयं पुण्ये सद्गुणे खलभयं विपरीतं दोषारोपणं करोति काये शरीरे मृत्युभयम् एवं सर्वं वस्तुजातं भुवि भयान्वितं वर्तते अतो वैराग्यमेवाभयं सर्वपदार्थेषु वैराग्यवान् पुरुषः न याचते विरोधं नैव करोति सर्वत्र वीतरागः॥ ३५ ॥

( भा० टी० ) भोगमें रोगका भय, सुख बढनेमें उसके क्षयका भय, अधिक धन होनेमें राजभय, मौन होनेमें दीनताका भय, संग्राम जीतनेमें शत्रुभय, रूपमें वृद्ध अवस्थाका भय, शास्त्रसे मान बढनेमें अपमानका भय, सद्गुणमें दुर्जनका भय और शरीरमें मृत्युका भय यों सर्वत्र भयके ही स्थान देख पडते हैं केवल वैराग्यही निर्भय ठौर है॥३५॥

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किन्नास्माभिर्विगलितविवेकैर्व्यवसितम् ॥
यदाढ्यानामग्रे द्रविणमदनिःशंकमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३६ ॥

( सं० टी० ) अमीषामिति । अस्माभिरमीषां प्राणानां कृते किल व्यवसितम् उद्यमितम् । कथंभूतैः अस्माभिर्विगलितविवेकैर्विगलितो भ्रष्टो विवेको येषां तैर्विवेकरहितैः यदाढ्यानामग्रे धनवतां पुरः वीतव्रीडैर्वीतलज्जैरस्माभिर्निजगुणकथापातकमपि

कृतं निजगुणानां कथया पातकं निजगुणकथापातकम् किंभूतानाम् आढ्यानां द्रविणमद-निःशंकमनसां द्रविणमदेन धनमदेन निःशंकं मनो येषां तेषाम् ॥ ३६ ॥

( भा० टी० ) जैसे कमलके पत्रपर जलके बूँन्दे चंचल रहते हैं वैसेही इन चंचल प्राणोंके हेतु विवेकत्यागकर हमने क्या उद्यम न किया क्योंकि, जिससे धनके मदसे मदान्ध लोगोंके निकट अपना गुण गान करना यह पाप निर्लज्ज होके किया ॥ ३६ ॥

# अथ कालमहिमा ।

भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रं च त-
त्पार्श्वे तस्य च सापि राजपरिषत्ताश्चन्द्रबिम्बाननाः ॥
उद्रिक्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपदं कालाय तस्मै नमः॥३७॥

( सं०टी० ) भ्रातरिति । तस्मै कालाय नमः अहो इत्याश्चर्ये भो भ्रातः अवलोक्यताम् किं कष्टम् स एव महान्नृपतिः चान्यत्सामंतचक्रं चान्यत्तस्य पार्श्वे सापि राजपारिषत् राजसभा चान्यत्ताश्चन्द्रबिम्बानना नार्य्यः चान्यत्स राजपुत्रनिवहः नृपकुमारसमूहः कथंभूतो राजपुत्रनिवहः उद्रिक्तः सदर्पः चान्यत्ते बंदिनः भद्राश्चान्यत्ताः कथाः यस्य वशात् तत्सर्वं पूर्वोक्तं स्मृतिपदमगात्कथाशेषं जगाम कालाय तस्मै नमः यतः सर्वं क्षीयते परन्तु कालो न क्षीयते ॥ ३७ ॥

(भा० टी० ) पहिले यहां कैसी सुन्दर नगरी थी उसका राजा कैसा उत्तम था और राज्य उसका कैसा दूरतक था उसके निकट सभा कैसी होती थी और चन्द्रमुखी स्त्रियां कैसी शोभायमान थीं और राजाके पुत्रोंका समूह कैसा प्रबल था कैसे वे बन्दीगण थे और कैसी अच्छी कथा कहते थे अब वे सब जिस कालके वशहोकर लुप्त होगये उस कालको नमस्कार है ॥ ३७ ॥

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ॥

इदानीमेते स्मः प्रतिदिवसमासन्नपतना-
द्गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३८ ॥

( सं० टी० ) वयमिति । येभ्यः समानवयोभ्यः समं जाताः खलु निश्चितं ते चिरपारंगता एव मृता एव यैः समं वृद्धास्तेऽपि स्मृतिविषयतां गमिताः स्मृतेर्विषयता स्मृतिविषयता तां स्मारिताः संतश्चेतोगोचरमायान्तीत्यर्थः । इदानीम् एते वयं स्मः सावरोधं किं वयं सिकतिलनदीतीरतरुभिः तुल्यावस्थां गताः सिकतिला वालुकाधिका नदी सिकतिलनदी तस्याः तीरतरवः शीघ्रपतनशीला भवन्तीत्यर्थः । यादृशास्ते तरवस्तादृगवस्थां वयं प्राप्ताः स्मः तस्मात् प्रतिदिवसं दिवसं दिवसं प्रति आसन्न पतनात् मरणात् एतावता संसारस्यावस्था ईदृशी वर्तते ॥ ३८ ॥

( भा० टी० ) जिनके साथ हम जन्मे थे उनको तो गये बहुत दिन बीते फिर जिनके साथ हम बडे हुए वेभी स्मरणपदमें गये अर्थात् मरे अब हम भी दिन दिन गिरते देखपडते हैं वालुका नदी तटके वृक्षके तुल्य दशाको प्राप्त होरहे हैं ॥ ३८ ॥

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र चान्ते न चैकः॥
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः काल्या सह बहुकलः क्रीडति प्राणसारैः॥३९॥

( सं० टी० ) यत्रेति। कालो मृत्युः काल्या सह कालरात्र्या सह प्राणसारैः कृतकाष्ठशुष्कैः क्रीडति क्रीडितुमारभते। कथंभूतः कालः बहुकलः बह्वी कला यस्यासौ बहुकलः किं कुर्वन् इमौ द्वौ रजनिदिवसौ इत्थमनेन प्रकारेण अक्षयौ विषय-पाशकाविव दोलयन् प्रक्षिपन् युक्तोऽयमर्थः अन्योऽपि यो द्यूतकृतक्रीडां कुरुते तस्याक्षौ पाशकौ विलोकयति । अत्र कालः क्रीडकः अत्र रजनिदिवसावेव पाशकौ इत्थं कथयन्न क्वचिदपि गृहे अनेके एकस्तत्र तिष्ठति अपि पुनः यत्र एकस्तत्र बहवः यत्र बहवस्तत्र एकोऽपि न कालक्रीडायाः इत्थं स्वभावः ॥ ३९ ॥

( भा० टी० ) जिस घरमें अनेक थे वहां एक दृष्टि पडता है और जहां एक था वहां अनेक देख पडे फिर एकभी न रह गया तौ देखो रात और दिनके पासे लुढा २ के इस संसाररूपी चौपडमें प्राणियोंको गोटी बनाके कालपुरुष अपनी कालरात्रि शक्तिसे खेल रहा है ॥ ३९ ॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदर्कान्दारानुत परिचरामः सविनयम् ॥
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-
न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ४० ॥

( सं० टी० ) तपस्यन्त इति । जने लोके कतिपयक्षणायुषि सति न विद्मः वयं किं कुर्मः किमिति संशये सुरनदीं गंगां निवसामः आश्रमं कुर्मः किं वयं तपस्यन्तः सन्तः तपः कुर्वन्तः सन्त उत अथवा दारान् कलत्राणि परिचर्यां कुर्मः कथंभूतान् दारान् गुणोदर्कान् गुणोत्कटान् उत अथवा शास्त्रौघान् पिबामः शृणुमः किं शास्त्रौघान् द्रुतविविधकाव्यामृतरसान् द्रुतस्तुतः विविधः काव्यामृतरसो येषु तान् वयं न विद्मः अस्माकं संशयो वर्त्तते एतेषु पदार्थेषु किं कुर्मः यो गुणाधिकस्तं सेवयामः ॥ ४० ॥

( भा० टी० ) तप करते हुए गंगातटपर बसे अथवा गुणवती स्त्रियोंके संग प्रेमसहित विचरें वा वेदान्तशास्त्रसमूह और अनेक काव्यामृतरस पियें भावार्थ यह कि, इस निमिषमात्र आयुष्यवाले देहको देखकर हम नहीं जान सकते कि क्या करैं ॥ ४० ॥

गंगातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ॥
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशंकाः
संप्राप्स्यन्ते जरठहरिणाः श्रृंगकंडूविनोदम् ॥ ४१ ॥

( सं० टी० ) गंगेति । संभावनायाम् मम तैः सुदिवसैर्भाव्यं यत्र दिवसेषु जरठहरिणाः प्रौढमृगा निर्विशङ्काः सन्तः श्रृङ्गकंडूविनोदं श्रृंगघर्षणलीलां सम्प्राप्स्यन्ते कथंभूतस्य मम हिमगिरिशिलायां बद्धं पद्मासनं येन तस्य क गंगातीरे पुनः किंभूतस्य

मम योगनिद्रां गतस्य योगस्य निद्रा योगनिद्रा तां गतः प्राप्तः तस्य केन ब्रह्मध्याना-भ्यसनविधिना ब्रह्मध्यानस्याभ्यसनं तस्य यो विधिः ब्रह्मध्यानाभ्यसनविधिस्तेन एवंविधेन निर्मलभावेन सुखसाध्या सिद्धसिद्धिः ॥ ४१ ॥

( भा० टी० ) जिससमय हम गङ्गाके तट हिमाचलकी शिलापर आसन लगा पद्मासन बाँधे बैठेंगे और ब्रह्मज्ञानके अभ्यासमें विधिपूर्वक आँख मूँद योगनिद्रामें प्राप्त होंगे, देखें हमारे ऐसे सुदिन कब होते हैं जहां निःशंक हो बूढे २ हरिण हमारे देहमें रगडके अपने शृंगकी खुजलाहट मिटावेंगे ॥ ४१ ॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ॥
भवाभोगोद्विग्नाः शिवशिवशिवेत्यार्तवचसा
कदा स्यामानन्दोद्गतबहुलबाष्पप्लुतदृशा ॥ ४२॥

( सं० टी० ) स्फुरदिति । वयं शिवशिवशिवेत्यार्त्तवचसा कदा स्याम किंवि-शिष्टा वयं भवाभोगोद्विग्ना भवस्य संसारस्याभोगस्तत्रोद्विग्नाः किंभूतेन वचसा आनन्दो-द्गतबहुलबाष्पप्लुतदृशा आनन्दादुद्गतानि बहुलानि यानि बाष्पाणि तैः प्लुते दृशौ यस्मिन् तद्वचस्तेन किंभूता वयं द्युसरितो गंगायाः क्वापि विजने पुलिने सुखासीनाः कासु रजनी-षु किंभूतासु रजनीषु शांतध्वनिषु उपशांतशब्दासु एवंविधा वासरा भाग्यहीनानां न भवेयुः ॥ ४२ ॥

( भा० टी० ) जहां प्रकाशित फैली चाँदनीसे निर्मलस्थल है ऐसे गंगा-तटमें सुखसे बैठे रहैं जब सब ध्वनि बन्द हों तब रात्रिमें शिव ३ आर्त्त-स्वरसे कहते हुए संसारके दुःखसे व्याकुल हों और आनन्दके आँसुओंसे पूर्णनेत्र होरहे हैं ऐसे हम कब होंगे ॥ ४२ ॥

महादेवो देवः सरिदपि च सैषा सुरसरि-
द्गुहा एवागारं वसनमपि ता एव हरितः ॥

सुहृद्वा कालोऽयं व्रतमिदमदैन्यं व्रतमिदं
कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता॥४३॥

(सं० टी०) महादेव इति। देवो महादेवो नान्यः सरिदपि नद्यपि सुरसरित्सुरनदी अगारं गृहं गुहा एव वसनमपि वस्त्रमपि ता एव हरितो दिशः अथवा सुहृन्मित्रमयं कालः इदमदैन्यव्रतम् इदं व्रतं कियद्वक्ष्यामः दयिता कलत्रं वटविटप एवास्तु ॥ ४३॥

( भा० टी० ) महादेवही एक देव, गंगाही नदी, एक गुहाही घर, दिशाही वस्त्र, कालही मित्र, किसीसे दीन न होना यही व्रत और कहांतक कहें वटका वृक्षही हमारी वल्लभा हो ॥ ४३ ॥

शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुंगादवनिमवनेश्चापि जलधिम् ॥
अधो गंगा सेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः॥४४॥

( सं० टी० ) शिर इति। शार्वं महेशशिरः स्वर्गादधो वर्तते पतति शिरस्तो महेश्वरमस्तकात् अधः क्षितिधरं जानीहि उत्तुंगाद्गिरीन्द्रादवनिमधो जानीहि। अवनेश्चापि जलधिं समुद्रम् अधो जानीहि स्तोकं गंगेयं पदम् अधोधः उपगता अथवा विवेकभ्रष्टानां विनिपातः शतमुखो भवति ॥ ४४ ॥

( भा० टी० ) जो विवेकसे भ्रष्ट होते हैं उनको नीचे पदपर गिरना सैंकडों प्रकारसे होता है देखो यह श्रीगंगा स्वर्गसे तो शिवजीके शिरपर गिरी और शिरसे हिमाचल पर्वतपर और ऊँचेपर्वतसे पृथिवीपर और पृथिवीसे समुद्रमें गिरी ॥ ४४ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ॥
मोहावर्त्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दति योगीश्वराः४५

( सं० टी० ) आशेति । नामेति सम्बोधने: आशा नदी अस्ति किंभूता आशानदी मनोरथा एव जलानि यस्यां सा पुनः किंभूता तृष्णातरंगाकुला पुनः किंभूता आशानदी रागग्राहवती स्नेहग्राहयुक्ता अन्यापि या नदी ग्राहवती जलचर-जीववती भवति पुनः किंभूता आशानदी वितर्कविहगा वितर्का विचारास्त एव विहगाः पक्षिणो यस्याः सा नद्यामपि विहंगा भवन्ति अस्यामपि तथैव पुनः किंभूता आशानदी मोहावर्तसुदुस्तरा मोहस्यावर्तो मोहावर्तस्तेन सुदुस्तरा अन्यापि नदी आवर्त्तैः दुस्तरा भवति पुनः किंभूता आशानदी अतिगहना अतीव गहनं यस्याम् अन्यापि नदी अतिगहना पुनः किम्भूता आशानदी धैर्यद्रुमध्वंसिनी धैर्यद्रुमस्य ध्वंसोऽस्या अस्तीति धैर्यद्रुमध्वंसिनी अन्यापि नदी द्रुमध्वंसिनी भवति पुनः किंभूता प्रोत्तुंगचिन्ता एव तटो यस्याः सा अन्यापि नदी तटिनी प्रोच्यते तस्या नद्याः पारंगता योगीश्वरा नंदंति सर्वोत्कर्षेण वर्तते किम्भूता योगीश्वरा-विशुद्धमनसो निर्मलमानसाः ॥ ४९ ॥

( भा० टी० ) आशा नाम एक नदी है, मनोरथका जल उसमें भरा है तृष्णारूपी तरंगोंसे पूर्ण है, प्रीतिही उसमें मगर हैं, नानाविधकी तर्कही उसमें पक्षी हैं, धैर्यरूपी वृक्षको ढाहनेवाली है, मोहरूपी भौंरे उसमें पड़े हैं इससे बड़ी दुस्तर और कठिन होरही है बड़ी चिन्ता ही उसके तट हैं उससे पार होकर बड़े शुद्ध मननशील योगी ही आनन्द पाते हैं ॥ ४५ ॥

**आसंसारं त्रिभुवनमिदं चिन्वतां तात तादृङ्**
**नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ॥**
**योऽयं धत्ते विषयकरिणीगाढगूढाभिमान-**
**क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ४६ ॥**

( सं० टी० ) आसंसारमिति । हे तात ! तादृक् कोपि पुमान् अस्माकं नयनपदवीं नेत्रगोचरं वा अथवा श्रोत्रवर्त्म श्रोत्रमार्गं नागतः योऽयं क्षीबस्यांतः-करणकारिणः संयमालानलीलां धत्ते किम्भूतोऽयं विषयकरिणीगाढगूढाभिमानः विषयः

एव करिणी हस्तिनी तस्यां गाढगूढः अत्यंतम् आरूढोऽभिमानो यस्य किम्भूतानामस्माकम् आसंसारं यावत् इदं त्रिभुवनं चिन्वतां सञ्चयतां वर्द्धयतां यो जितेन्द्रियः सोऽखिलः ॥ ४६ ॥

( भा ० टी० ) जबसे यह संसार प्रवृत्त हुआ है आजतक हे भैया! हम त्रिभुवनमें खोजते फिरते हैं पर ऐसा पुरुष देखने और सुननेमें न आया जो विषयरूपी हथिनीमें पैदा हुआ है अत्यंत अहंकार जिसको ऐसे अन्तःकरणरूपी उन्मत्त हाथीको रोककर वशमें रक्खे अर्थात् विषयोंमें फँसा मन वशमें नहीं होसकता ॥ ४६ ॥

## सांप्रतं निर्वेदतायाः स्वरूपमाह ।

ये वर्द्धंते धनपतिपुरःप्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ॥
तेषामन्तः स्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः॥ ४७॥

( सं० टी० ) ये वर्द्धन्त इति । अहं तेषां वासराणाम् अन्तः स्फुरितहसितं ध्यानच्छेदे स्मरेयं चिन्तयामि ये वासरा धनपतिपुरो धनाढ्यानां पुरस्तात्प्रार्थनादुःखेन दीर्घा वर्तंते ते प्रार्थनादुःखदीर्घाः चान्यद्ये वासराः विषयाक्षेपपर्यस्ता बुद्धिर्यस्य स विषयाक्षेपपर्यस्तबुद्धिस्तस्य किम्भूतोहं शिखरिकुहरे या ग्रावशय्या तस्यां निषण्णः वा शिखरिकुहरस्य पर्वतविवरस्य या ग्रावशय्या तत्र निषण्णः निविष्टः ॥ ४७ ॥

( भा० टी० ) जो दिन धनवानोंके निकट प्रार्थनाके दुःख सहनेवालोंको बढजाते हैं और जो विषयोंके नष्ट होनेसे विपरीत बुद्धिवालोंको छोटे प्रतीत होते हैं उन दिनोंको हम अन्तःकरणमें हँसकर ध्यानसे विश्रामको पाकर पर्वतकी कंदरामें पत्थरकी चट्टानरूपी शय्यापर बैठे हुए स्मरण करेंगे अर्थात विरक्त होंगे ॥ ४७ ॥

विद्या नाधिगता कलंकरहिता वित्तं च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न सम्पादिता ॥

**आलोलायतलोचना युवतयः स्वप्नेपि नालिङ्गिताः**
**कालोयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ ४८ ॥**

( सं०टी० ) विद्येति । अहो अयं कालोऽस्माभिः परपिण्डे लोलुपतया काकैरिवप्रेरितः परपिंडस्य परग्रासस्य लोलुपता तया कथमस्माभिर्विद्यानाधिगता न पठिता किम्भूता विद्या कलङ्करहिता दोषरहिता इत्यर्थः चान्याद्वित्तं नोपार्जितम् अपि पुनः समाहितेन मनसा निश्चलचित्तेन पित्रोर्मातृजनकयोः शुश्रूषापि न संपादिता न कृता चान्यत्स्वप्नेपि युवतयो नालिंगिताः किम्भूता युवतय आलोलायतलोचनाः आसमन्ताद्भावेन लोलानि चपलानि आयतानि दीर्घाणि लोचनानि यासां ताः तस्मात् कारणात् मुधैव जन्म गमितम् ॥ ४८ ॥

( भा० टी० ) निष्कलंक विद्या नहीं पढी धन न कमाया एकाग्रचित्त होके मातापिताकी सेवा न की तथा चंचल और बडेनेत्रवाली स्त्रियोंको स्वप्नमेंभी गलेसे न लगाया पराये ग्रासका लोभ करते २ काकके समान सब समय योंही बिताया ॥ ४८ ॥

**वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः**
**स्मरन्तः संसारे विगुणपरिणामावधिगतीः ॥**
**वयं पुण्यारण्ये परिणतशरच्चन्द्रकिरणै-**
**स्त्रियामां नेष्यामो हरचरणचित्तैकशरणाः ॥ ४९ ॥**

( सं० टी० ) वितीर्ण इति । वयं पुण्ये पवित्रेऽरण्ये कदा त्रियामां नेष्यामः कैः समं परिणतशरच्चन्द्रकिरणैः समं परिणताः परिणामं प्राप्ता ये शरत्कालीनाश्चन्द्रकिरणाः परिणतशरच्चन्द्रकिरणास्तैः क सति सर्वस्वे सर्वधने वितीर्णे सति किंभूता वयं तरुणकरुणापूर्णहृद याः तरुणकरुणया पूर्णं हृदयं येषां ते तरुणकरुणापूर्णहृदयाः वयं किं कुर्वन्तः संसारे विगुणा याः पारिणामावधिगतीः स्मरंतः विगुणपरिणामावधयो गतयः विगुणपारिणामावधिगतयस्ताः पुनः किम्भूता वयं हरचरणचित्तैकशरणाः हरचणावेव चित्तस्य एकं शरणं येषां ते वयम् ॥ ४९ ॥

( भा० टी० ) सर्वस्व नष्ट होनेपर बडी करुणासे पूर्ण हृदयवाले और संसारमें जितनी वस्तु हैं उन सबको गुणोंसे शून्य (नाशवान्) स्मरण करते और शिवके चरणमें लगे हुए चित्तको अपना रक्षक समझ शरद् ऋतुकी चांदनीमें किसी पवित्र वनमें बैठे हम कब रात्रिको व्यतीत करेंगे अर्थात् कब यह संसार छूटेगा ॥ ४९ ॥

**वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या**
**सम इह परितोषो निर्विशेषावशेषः ॥**
**स तु भवति दरिद्रो यस्य तृष्णा विशाला**
**मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ ५० ॥**

( सं० टी० ) वयमिति । हे राजेन्द्र ! इहास्मिन् संसारे वयं वल्कलैः कृत्वा परितुष्टाः चान्यस्त्वं च लक्ष्म्या परितुष्टः अतः एतावता सन्तोषस्य तत्त्वमेकमेव इहास्मिन्नर्थे परितोषः समः एव । किम्भूतः परितोषः निर्विशेषावशेषः निर्विशेष एव अवशेषोऽवसानं यस्य स निर्विशेषावशेषः विशेषश्चायं तु पुनः स दरिद्रो भवति यस्य पुरुषस्य विशाला विस्तीर्णा तृष्णा अनन्ततृष्णस्य पुंसः दारिद्र्यं क्वापि न यातीत्यागमः तु पुनः मनसि परितुष्टे सति कोऽर्थवान् को दरिद्रः अपि तु न कोपि ॥ ५० ॥

( भा० टी० ) हम वृक्षके बकलें पहिरके संतुष्ट हैं तुम धनसे संतुष्ट हो जब हमारी तुम्हारी तुष्टी सम ठहरी तब संतोष निर्विशेष हुआ अर्थात् भेद न रहा दरिद्र वह होताहै जिसे बडी तृष्णा है जब मन संतोषसे पूर्ण हुआ फिर कौन दरिद्री और कौन धनवान् है ॥ ५० ॥

**यदेतत्स्वाच्छन्द्यं विहरणमकार्पण्यमशनं**
**सहायैः संवासः श्रुतमुपशमैकव्रतफलम् ॥**
**मनो मन्दस्पदं बहिरपि चिरस्यापि विमृश-**
**न्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ५१ ॥**

( सं० टी० ) यदेतदिति । तदहं न जाने एषा कस्य तपसः परिणतिः परिणामो वर्त्तते एषा का परिणतिः यदेतत् स्वच्छन्दं विहरणम् अन्यच्चाकार्पण्यम्

अशनं प्रबलं भोजनम् अन्यच्च सहायैः संवासः परिकरैः सह निवासः उपशमैकव्रतफलम् उपशमरसोद्भासितं श्रुतं शास्त्रं बहिरपि बाह्यप्रदेशेपि मनो मंदस्पंदं कल्पनारहितम् अहं किं कुर्वन् चिरस्य चिररात्राय विमृशन् विचारं कुर्वन् चिरकालं विचिन्तयन्नित्यर्थः ॥ ९१ ॥

( भा० टी० ) स्वाधीन विचरना, विना याचे भोजन करना सहाय करनेवाले श्रेष्ठ पुरुषोंके संग रहना ऐसा शास्त्र कहना वा सुनना कि, जिसका उपशमरूपी व्रतही फल हो और यदि मन पदार्थोंमें हो तो विचार करता हुआ मन्द मन्द गमन करे यह सब प्राप्त होना हम नहीं जानते कि, किस प्राचीन और बडे तपका फल है ॥ ९१ ॥

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशासुदशकममलं तल्पमस्वल्पमुर्वी ॥
येषां निःसंगतांगीकरणपरिणतिः स्वात्मसन्तोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्मनिर्मूलयन्ति ९२

( सं० टी० ) पाणिरिति । धन्यास्तु ते एव ये कर्म निर्मूलयन्ति किम्भूताः धन्याः संन्यस्तदैन्यव्यतिकरनिकराः संन्यस्तो निराकृतः दैन्यव्यतिकरस्य निकरो यैस्ते पुनः किम्भूतास्ते स्वात्मसंतोषिणः स्वात्मन्येव संतोषो येषां ते अन्यच्च येषां पुरुषाणां निःसंगतांगीकरणपरिणतिः निःसंगतायाः अंगीकरणं निःसंगतांगीकरणं तस्य परिणतिः निःसंगतांगीकरणपरिणतिः येषां पुरुषाणां पात्रं भोजनभांडं पाणिः हस्तः पवित्रं भ्रमणपरिगतं भैक्षम् अक्षय्यमव्ययम् अन्नम् अथं वस्त्रं विस्तीर्णं आशासुदशकम् अमलं निर्मलम् अस्वल्पं विस्तीर्णं शय्या उर्वी पृथ्वी एवंविधरूपेण ये संसारपारं गच्छंति त एव धन्याः ॥ ९२ ॥

( भा० टी० ) अपने आत्मामें संतोषवाले उन पुरुषोंको धन्य है कि, जिनका हाथही पात्र है और जो भ्रमण करके भिक्षाका अन्न खाते हैं और जिनका निर्मल दिशारूपी दशावाला आकाश वस्त्र है और छोटीसी पृथिवी शय्या है और जो परिणाममें असंग ( इकले ) रहनेको स्वीकार

करते हैं आर जिन्होंने दीनताके समूहको भली प्रकार छोडदिया है और जो कर्मकी जडको उखाड देते हैं ॥ ९२ ॥

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो
वयं तु स्थूलेच्छा महति च पदे बद्धमनसः ॥
जरा देहं मृत्युर्हरति सकलं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः ॥५३॥

( सं० टी० ) दुराराध्य इति । हे सखे ! जगति रसायां विदुषः पण्डितस्य तपसः अन्यत्रान्यत् श्रेयः कल्याणं न कथं स्वामी अधिपतिः दुराराध्यः क्षितिभुजो राजानः तुरगचलचित्ताः तुरगवचलचेतसः तु पुनः वयं स्थूलेच्छाः चान्यन्महति पदे मुक्तिलक्षणे बद्धमनसः जरा देहं हरति मृत्युरिदं सकलं जीवितं हरति ततस्तपसो विना श्रेयो न ॥ ९३ ॥

( भा० टी० ) स्वामीकी सेवा करनी बडी कठिन है और राजा लोग घोडेके समान चंचल चित्त होते हैं. हम तो मोटी इच्छावाले हैं बडे पदमें हमारा मन बँधा ( लगा ) हुआ है और देहकी वृद्ध अवस्था है और संपूर्ण जीनेको मृत्यु हरलेती है इससे हे मित्र ! ज्ञानवान्को तपसे अन्य कल्याण कहीं नहीं है ॥ ९३ ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भंगुरम् ॥
लोला यौवनलालना तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विधद्ध्वं बुधाः ॥५४॥

( सं० टी० ) भोगा इति । हे बुधाः ! योगे मनोवचनकायसंरोधलक्षणे बुद्धिं विधद्ध्वम् इतरदखिलं नृणां तुषप्रायम् । कथं भोगाः पञ्चांगाः मेघवितानमध्यविलसत्सौदामिनीचञ्चलाः मेघवितानमध्ये विलसन्ती या सौदामिनी विद्युत्तद्वच्चञ्चलाश्चपलाः चान्यदायुर्जीवितं वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भंगुरं वायुविघट्टिता याऽभ्रपटली

तत्र लीनं यदम्बु पानीयं तद्वद्भंगुरं विनाशशीलं तनुभृतां प्राणिनां यौवनलालना तारुण्यातिपालनं लोला चञ्चला वर्त्तते इति आकलय्य इति विचिंत्य द्रुतं शीघ्रं योगे मनो विधद्ध्वं किंभूते योगे धैर्य्यसमाधिसिद्धिसुलभे ॥ ९४ ॥

( भा० टी० ) विस्तृत मेघमें चमकती हुई बिजलीके समान देहधारियोंका भोग चंचल है वायुसे छिन्न भिन्न मेघ जलकी सदृश आयुष्य नाशवान् है और यौवनकी उमंगभी स्थिर नहीं है हे पंडितो ! ऐसा समझकर धैर्यसमाधिकी सिद्धिसे सुलभ जो योग है तिसमें बुद्धि धारण करो ॥ ९४ ॥

पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपाली-
मादाय न्यायगर्भद्विजमुखहुतभुग्भूमधूम्रोपकण्ठम्॥[1]
द्वारंद्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणीसधन्योनपुनरनुदितं तुल्यकुल्येषुदीनः॥५५॥

( सं० टी० ) पुण्ये इति । मानी प्राणी अभिमानी पुमान् क्षुधार्तः स धन्यः सुष्ठु वरम् उदरदरीपूरणाय द्वारं द्वारं प्रवृत्तः किं कृत्वा महति ग्रामेऽथवा वने कपालीं कर्परम् आदाय गृहीत्वा कथम्भूतां कपालीं सितपटच्छन्नपालीं सितपटेन श्वेतवस्त्रेण छन्ना आच्छादिता पाली यस्याः सा तां किंभूते ग्रामे वा वने पुण्ये पवित्रे किंभूतं द्वारं न्यायगर्भद्विजमुखहुतभुग्भूमधूम्रोपकंठं न्यायगर्भेण न्यायशास्त्रपठितेन द्विजमुखेन हुतभुक् वैश्वानरस्तस्य भूमा प्रचुरो धूम्रस्तेन व्याप्त उपकण्ठो यस्य तत् ॥ ९५ ॥

( भा० टी० ) पवित्र ग्राम अथवा पवित्र बडे वनमें उज्ज्वल वस्त्रसे ढका हुआ ठिकरा लेकर जिनकी चौखट न्यायपूर्वक ब्राह्मणोंकी होमीहुई अग्निके धूमसे मलिन हो उनके द्वारपर क्षुधासे पीडित पेटरूपी कन्दरा भरनेको नित्य प्रति भ्रमण करताहुआ मानी पुरुष अच्छा है पर समानकुलवालोंमें दीन होना अच्छा नहीं ॥ ९५ ॥

---

१ हुतभुग्धूमधूम्रोपकण्ठमिति पाठांतरम् ।

चाण्डालः किमयं द्विजातिरथवा शूद्रोथ किं तापसः
किंवा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् ॥
इत्युत्पन्नविकल्पजल्पमुखरैः सम्भाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः॥५६॥

( सं० टी० ) चाण्डाल इति । अत एव योगिनः पथि मार्गे जनैः एवं भाष्यमाणाः न क्रुद्धाः यान्ति तर्हि तुष्टमनसो यान्ति किम्भूतैः जनैः इत्यनेन प्रकारेण उत्पन्नविकल्पजल्पमुखरैः इति अयं किं चाण्डालः वाऽथवा द्विजो ब्राह्मणः अथवा शूद्रः अथ किं तापसः वाऽथवा योगीश्वरः किम्भूतो योगीश्वरः तत्त्वनिवेशपेशलमतिः तत्त्वनिवेशे पेशला मनोज्ञा मतिर्यस्यासौ एवंविधा निर्विकल्पास्त एव धन्याः ॥ ५६ ॥

( भा० टी० ) यह चंडाल है, वा ब्राह्मण, शूद्र, तपस्वी अथवा तत्त्वविवेकमें चतुर बुद्धिमान् कोई योगीश्वर है ऐसे संदिग्ध अनेक प्रकारके वक्ताजनोंके विकल्पों करके मार्गमें संभाषण करनेपरभी योगीलोग रागद्वेष नहीं करते किन्तु स्वच्छन्द अपने मार्गसे चले जाते हैं ॥ ५६ ॥॥

सखे धन्याः केचित्त्रुटितभवबन्धव्यतिकरा
वनान्ते चित्तान्तर्विषमविषयाशीविषगताः ॥
शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगां
नयन्ते ये रात्रिं सुकृतचयचित्तैकशरणाः ॥ ५७ ॥

( सं० टी० ) सखे इति हे सखे मित्र ! त एव धन्याः ये एवम्प्रकारेण रात्रिं नयंते किम्भूतास्ते सुकृतचयचित्तैकशरणाः पुनः सुकृतानां चयः सुकृतचयश्चित्ते एकं शरणं येषां ते सुकृतचयचित्तैकशरणाः भनः किम्भूताः त्रुटितभवबंधव्यतिकराः त्रुटितो भवबंधस्य व्यतिकरो येषां ते वनांते वनमध्ये चित्तांतर्विषमविषयाशीविषगताः चित्तांतर्मानसमध्ये विषमो यो विषयः एव आशीविषः दृष्टिविषोरगो गतो येषां ते विषम-

विषयाशीविगालिताः इति पाठः किम्भूतां रात्रिं शरच्चंद्रज्योत्स्नाधवलगगनाभोगसुभगां शरच्चंद्रस्य ज्योत्स्नया शरत्कालिकचन्द्रमसः कांत्या धवलेन गगनाभोगेन विस्तारेण सुभगा मनोज्ञा सा शरच्चंद्रज्योत्स्नाधवलगगनाभोगसुभगा ताम् ॥ ९७ ॥

( भा० टी० ) हे मित्र ! उन पुरुषोंको धन्य है जो वनमें बैठे हुए शरदृतुकी चाँदनीसे श्वेत, आकाशके विस्तारसे सुंदर और मनोहर रात्रिको इसप्रकार बिताते हैं कि पुण्यका समूह जिनके मनमें शरण है और जिन्होंने भवबंधनके क्षोभको तोडदिया और जिनके मनमेंसे भयानक कठोर सर्परूपी विषय निकसगया है ॥ ९७ ॥

एतस्माद्विरमेंद्रियार्थगहनादायासकादाश्रया-
च्छ्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ॥
शांन्तं भावमुपैहि संत्यज निजां कल्लोललोलां गतिं
मा भूयो भज भंगुरां भवरतिं चेतः प्रसीदाधुना ॥९८॥

( सं० टी० ) एतस्मादिति । हे चेतः ! हे आत्मन् ! अधुना प्रसीद प्रसादं कुरु एतस्मादिंद्रियार्थगहनात् विरम किम्भूतादिंद्रियार्थगहनात् आयासकादाश्रयात् कुत्सित आश्रयः कदाश्रयस्तस्य भावः कादाश्रयः आयसेन कादाश्रयः आयासकादाश्रयस्तस्मात् क्षणात् शांतं भावमुपैहि किम्भूतं शांतं भावं श्रेयोमार्गं पुनः किम्भूतं शांतं भावम् अशेषदुःखशमनव्यापारदक्षम् अशेषाणि यानि दुःखानि तेषां शमनव्यापारे दक्षं हे चेतः ! निजां कल्लोललोलां गतिं संत्यज परिहर भूयः भंगुरां विनश्वरां भवरतिं मा भज मा सेवस्व एभिर्लक्षणैः संसारस्य बुद्धिरेव स्यात्तस्मा-त्कारणात्तां मा भजेत्यर्थः ॥ ९८ ॥

( भा० टी० ) हे चित्त ! बडे परिश्रमसे प्राप्तहुए और दुःखआश्रय-वाले इंद्रियोंके विषयरूपी वनसे विश्राम ले सकल दुःख विध्वंस करनेके व्यापारमें समर्थ कल्याणमार्गको शीघ्र प्राप्त हो शांतभाव ग्रहण कर, तरं-गसी अपनी चंचलगति छोड दे इस नाशवान् संसारी इच्छाको फिर सेवन मतकर अब तू आपही प्रसन्नरूप हो ॥ ९८ ॥

**पुण्यैर्मूलफलैः प्रिये प्रणयिनि प्रीतिं कुरुष्वाधुना**
**भूशय्यानववल्कलैरकरणैरुत्तिष्ठ यामो वनम् ॥**
**क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा**
**चित्तव्याध्यविवेकविह्वलगिरां नामापि न श्रूयते ॥५९॥**

( सं०टी० ) पुण्यैरिति । हे प्रणयिनि ! हे प्रिये ! उत्तिष्ठ वनं यामः यत्राविवेक-मूढमनसाम् ईश्वराणां धनवतां नामापि न श्रूयते किम्भूतानामीश्वराणां क्षुद्राणां तुच्छानां पुनः किम्भूतानाम् ईश्वराणां चित्तव्याध्यविवेकविह्वलगिरां चित्तव्याधीनाम् अविवेकेन विह्वला गीर्वाणी येषां तेषां हे प्रिये ! पुण्यैः पवित्रैः मूलफलैः प्रीतिं कुरुष्व अन्यच्च भूशय्यानववल्कलैः प्रीतिं कुरुष्व किम्भूतैर्भूशय्यानववल्कलैः अकरणैः क्रियते अनेनेति करणं न करणं येषां तानि अकरणानि तैः करणक्रियारहितैः ॥५९॥

( भा० टी० ) अब हम वनमें जाते हैं हे बुद्धि ! हे प्रणयिनी ! प्रीति-करनेवाली; तू भी उठ और पवित्र फलमूलसे अब अपना पोषण कर, बनी बनाई भूमि शय्या और बने बनाये नवीन वल्कलके वस्त्रोंसे निर्वाह कर जिस वनमें अविवेकसे जिनका मूढ मन है और जो क्षुद्र हैं और धन-रूपी व्याधिजनित अविचारसे जिनकी बुद्धि विह्वल है उनका नामभी सुनाई नहीं देता है ॥ ५९ ॥

**मोहं मार्जयतामुपार्जय रतिं चन्द्रार्धचूडामणौ**
**चेतः स्वर्गतरंगिणीतटभुवामासङ्गमङ्गीकुरु ॥**
**को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च स्त्रीषु च**
**ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ६० ॥**

( सं० टी० ) मोहमिति । हे चेतः ! मोहं मार्जयतां दूरीक्रियतां रे प्रणयिन् ! चंद्रार्धचूडामणौ रतिं तोषमुपार्जय रे चेतः स्वर्गतरंगिणीतटभुवाम् आसङ्गं सङ्गतिमङ्गी-कुरु नः अस्माकं वाऽथवा वीचिषु कल्लोलेषु प्रत्ययो विश्वासः चान्यजलबुद्बुदेषु वर्षावारिपुटेषु कः प्रत्ययः चान्यत्तडिल्लेखासु सौदामिनीषु च पुनः स्त्रीषु कः प्रत्ययः यथा एतेषु स्थानेषु नोऽस्माकं प्रत्ययो नास्ति तथा जीवितेषु नास्ति ॥ ६० ॥

(भा० टी०) हे चित्त! मोहको छोड जिनके शीशमें अर्द्धचंद्र विराजमान है उन शिवजीसे प्रीति कर और गंगातटके वृक्षोंके नीचे विश्राम ले देखो तरंग, पानीके बुलबुले, बिजुलीकी चमक, स्त्री, अग्निकी ज्वालाकी शिखा, सर्प और नदीके प्रवाहमें स्थिर रहनेका क्या विश्वास अर्थात् इन सबके समान सातवीं स्त्रीभी चंचल है तिनके विलासमें मत भूल ॥ ६० ॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावशपरिणतिश्चामरग्राहिणीनाम् ॥
यद्यस्त्येवं कुरु भवरसास्वादने लंपटत्वं
नोचेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६१ ॥

(सं० टी०) अग्रे। इति रे चेतः! यदि एवमस्ति तदा भवरसास्वादने लंपटत्वं कुरु एवं किम् यदि तवाग्रे (स्फीतं प्रचुरं) गीतं भवति अन्यच्च पार्श्वतो दाक्षिणात्याः दक्षिणदेशीयाः सरसकवयो भवंति अन्यच्च पृष्ठे चामरग्राहिणीनां सुंदरीणां लीलावशपारिणतिश्च भवति यदैव एवं सौख्यं भवति तदा संसारं कुरु हे चेतः! चेदेवं न तदा सहसा निर्विकल्पे सामाधौ प्रवेशं कुरु ॥ ६१ ॥

(भा० टी०) सन्मुख प्रवीण गवइये गाते हों दहिने बाँएँ दक्षिण दशके सरस कविलोग काव्य सुनाते हों और पीछे चँवर डोलानेवाली सुंदर स्त्रियोंके कंकणकी मधुर झनकारें होती हों जो ऐसी सामग्री तुझे प्राप्त हो तो संसारके रसका स्वाद लेनेमें लिपट; नहीं तो हे चित्त स्थिरसमाधिमें प्रवेश कर ॥ ६१ ॥

विरमत बुधा योषित्संगात्सुखात्क्षणभंगुरा-
त्कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ॥
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६२ ॥

( सं० टी० ) विरमतेति । हे बुधाः ! योषित्संगात्सुखाद्विरमत विरतिं भजत किम्भूतात् सुखात् क्षणभंगुरात् करुणामैत्रीप्रज्ञावधूजनसंगमं कुरुत विदधत करुणा च मैत्री च प्रज्ञा च करुणामैत्रीप्रज्ञास्ता एव वधूजनस्तस्य संगमः करुणामैत्रीप्रज्ञावधूजन-संगमस्तम् खलु निश्चितं नरके घनस्तमण्डलम् अथवा श्रोणीबिम्बं नितम्बबिम्बं शरणं नास्ति । कथम्भूतं घनस्तनमण्डलं हाराक्रान्तं हारविभूषितम् । कथंभूतं श्रोणीबिम्बं रणन्मणिमेखलं शब्दायमाना मणिमेखला यस्मिंस्तत् रणन्मणिमेखलम् ॥ ६२ ॥

( भा० टी० ) हे पण्डितो ! स्त्रियोंके संगसे पैदा हुए क्षणिक नश्वर सुखसे विश्राम लो ( हटो ) और मैत्री करुणा और प्रज्ञारूपी वधूसे संगम करो नरकमें जब ताडना होगी उस समय हारोंसे भूषित स्त्रियोंके स्तन-मंडल और क्षुद्रघंटिकासे शोभित कटि सहायता न करेंगे ॥ ६२ ॥

**प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं-**
**काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ॥**
**तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा**
**सामान्यःसर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः॥६३॥**

( सं० टी० ) प्राणेति । हे आत्मन् ! अनुपहतविधिश्रेयसां पुरुषाणाम् एषः पन्थाः न उपहतः न निराकृतः अनुपहतेन विधिना मार्गेण श्रेयो येषां ते अनुपहत-विधिश्रेयसस्तेषां मुक्तानामित्यर्थः तेषामेष मार्गः । क एष मार्गः प्राणाघातान्निवृत्तिः जीवहिंसाविरामः परधनहरणे परद्रव्यापहारे संयमः परिहारः पुनः किं सत्यवाक्यं पुनः किं काले शक्त्या प्रदानं पुनः किं परेषां युवतिजनकथामूकभावः पुनः किं तृष्णा-स्रोतोविभङ्गः लोभप्रवाहविच्छेदः चान्यद्गुरुषु विनयः सर्वभूतानुकंपा सर्वप्राणिदया सर्वशास्त्रेषु सामान्यः समानभावः मोक्षमार्गिणामेष मार्गः ॥ ६३ ॥

( भा० टी० ) हे मन ! तिरस्कारके अयोग्य मार्गसे जिनका कल्याण है ऐसे मुमुक्षु पुरुषोंका यही मार्ग है कि, हिंसाका त्याग और पराये धनहरनेसे विराम ( हटना ) सत्य बोलना और समय पर शक्तिके अनुसार देना और परस्त्रीकी जहां चर्चा हो वहां मूक रहना और सब प्राणियोंपर

दया रखना और तृष्णाके सोतोंका त्याग करना और सब शास्त्रोंको समान समझना ॥ ६३ ॥

मातर्लक्ष्मि भजस्व कंचिदपरं मत्कांक्षिणी मास्म भू-
र्भोगेभ्यः स्पृहयालवो न हि वयं का निःस्पृहाणामसि॥
सद्यःपूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षासक्तुभिरेव सम्प्रति वयं वृत्तिं समीहामहे॥६४॥

( सं० टी० ) मातरिति हे मातर्लक्ष्मि ! कंचिद्वा अपरं भजस्व मत्कांक्षिणी मास्मभूः माभूयाः वयं भोगेभ्यो न स्पृहयालवः नेच्छवः निःस्पृहाणां निरीहाणां त्वं कासि वयं भिक्षासक्तुभिरेव संप्रतीदानीं वृत्तिं दीनगतजीविकां समीहामहे वाञ्छामहे क सति सद्यस्तत्कालं पूतपलाशपत्रपुटिकापात्रे पवित्रीकृते यद्येवमस्माकं स्थितिस्तदा वयं त्वया किं कुर्मः ॥ ६४ ॥

( भा० टी० ) हे लक्ष्मी माता ! अब तू अन्य किसी पुरुषका सेवन कर हमारी आकांक्षा मत कर हम विषयभोगके इच्छुक नहीं निःस्पृही विरक्तोंके समीप तू तुच्छ है क्योंकि अब हम हरे पलाशपत्रके पवित्र दोनोंमें भिक्षाके सत्तुसे अपने जीवनवृत्तिकी इच्छा रखते हैं ॥ ६४ ॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ॥
किं जातमधुना येन यूयं यूयं वयं वयम् ॥६५॥

( सं०टी० ) यूयमति । हे मित्र ! पूर्वम् आवयोः तव ममेति बुद्धिरासीत् कथं यूय भवन्तः वयमेव वयं यूयमित्यभेदबुद्धिरासीत् अधुना किं जातं निमित्तं येन यूयं यूयमेव वयं वयमेवेति भेदबुद्धिर्जाता ॥ ६५ ॥

( भा० टी० ) जो तुम हो सो हम हैं और जो हम हैं सो तुम हो परस्पर कुछ भेद नहीं है ऐसीही बुद्धि हमारी प्रथम थी अब क्या नई बात हुई कि जिससे तुम तुम्हीं हो हम हमीं हैं ॥ ६५ ॥

बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः
किं क्षिप्यंते विरमविरम व्यर्थ एष श्रमस्ते ॥

संप्रत्यन्ते वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥६६॥

( सं० टी० ) बाले इति । हे बाले ! हे सुन्दरि ! तावकीनं लीलामुकुलितम् अमी मन्थरा दृष्टिपाता अस्मासु किं क्षिप्यंते विरमविरम एष ते तव श्रमो व्यर्थो निरर्थकः सम्प्रति वयम् अन्ये ते न भवामः अस्माकं बाल्यमुपरतम् अस्माकमास्था वनांते कथं क्षीणः मोहो गतः इदं जगज्जालं तृणमिव तुच्छम् आलोकयामः विलोकयामः ॥६६॥

( भा० टी० ) हे बाला स्त्री ! लीलासे मींच २ कर मन्द मंद दृष्टिरूप बाण हमारे ऊपर क्यों फेंकती है अर्थात् हमारीतरफ क्यों देखती है विरम २ ( हट २ ) तेरा यह परिश्रम निष्फल है क्योंकि अब हम और हैं और वे नहीं अब हमारी बाल्य अवस्था ( मूर्खता ) गयी और वनमें रहनेका हमारा निश्चय है हमारा मोह नष्ट होगया है और जगत्के जालको तृणके समान देखते हैं ॥ ६६ ॥

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ॥
गतो मोहोऽस्माकं स्मरकुसुमबाणव्यतिकर-
ज्वलज्ज्वाला शान्ता तदपि न वराकी विरमति॥६७॥

( सं०टी० ) इयमिति । इयं बाला मां प्रति चक्षुर्नेत्रम् अनवरतं नितरां किं क्षिपति । कथंभूतं नेत्रम् इंदीवरदलप्रभाचोरम् इंदीवरस्य कमलस्य दलम् इन्दीवरदलं तस्य प्रभां चोरयतीति इन्दीवरदलप्रभाचोरम् अनया किमभिप्रेतं किं वाञ्छयते अस्माकं मोहो गतः स्मरकुसुमबाणव्यतिकरज्वलज्ज्वाला शांता वराकी तदपि न विरमति ॥ ६७ ॥

( भा० टी० ) यह बाला स्त्री मेरे ऊपर बार बार नीलकमलके दलकी कांतिसेभी सुंदर नेत्रको फेंकती है इसने क्या समझा है अब तो हमारा मोह गया और कामदेवके पुष्परूपी बाणोंके क्षोभसे पैदा हुई जलती अग्निकी ज्वाला शांत होगयी है तौभी यह वराकी ( मूर्ख ) नहीं हटती ॥ ६७ ॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ॥
किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपांकुर-
च्छायाचंचलमाकलय्य सकलं संतो वनांतं गताः॥६८॥

( सं० टी० ) रम्यमिति । सन्तः सत्पुरुषा वनांतं गताः किमिति संभावनायां तेषां वसतये निवासाय हर्म्यतलं रम्यं नाभूत्किम् श्रवणयोग्यं गेयं गानं नाभूत् किम् अधिकप्रीयते प्राणसमायाः स्त्रियाः समागमसुखं नाभूत्किम् एतत्सर्वम् अभूदिति यावत् । तथापि संतो वनांतं गताः वनं सेवयामासुः किंतूद्भ्रांतपतत्पतंगपवनव्यालोलदीपांकुरच्छायाचञ्चलं सकलं जीवलोकम् आकलय्य विचिंत्य हृदये ज्ञात्वा इत्यर्थः॥६८॥

( भा० टी० ) संतजनोंके निवासके लिये क्या महल न था और सुननेके योग्य क्या उत्तम २ गाना न था और क्या अधिक प्रीति करनेवाली प्राणप्यारी स्त्रीका सुख न था अर्थात् यह सब था तो भी संतजन इस जीवलोक ( जगत् ) को हिलतेहुये दीपककी छायामें भ्रमते मूर्ख पतंगके समान चंचल ( मरणके उन्मुख ) देखकर वनमें चलेगये ॥ ६८ ॥

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलेभ्यश्च शाखाः॥
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि ॥ ६९ ॥

( सं० टी० ) किं कन्दा इति । यत्तु खलानां दुर्जनानां मुखानि वीक्ष्यन्ते विलोक्यन्ते । यत्तदोर्नित्यं सम्बन्धः । तत्कन्दरेभ्यः कन्दाः प्रलयमुपगताः क्षयं जग्मुः वाऽथवा गिरिभ्यः पर्वतेभ्यः निर्झराः क्षयमुपगताः वाऽथवा वल्कलेभ्यस्तरुभ्यः शाखाः प्रध्वस्ता विनाशमुपजग्मुः । कथम्भूताः शाखाः सरसफलभृतः सरसानि

फलानि बिभ्रतीति । किं खलानां प्रसभं यथा भवति तथा अपगतप्रश्रयाणां प्रोल्लसद्गर्वाणां किम्भूतानि मुखानि दुःखोपात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि दुःखेनोपात्तम् उपार्जितं यदल्पवित्तं तस्य स्मयवशपवनेनासमंताद्भागेन नर्तिता भ्रूलता यैस्तानि ॥ ६९ ॥

( भा० टी० ) पहाडोंकी कंदराओंसे कन्द मूल और पर्वतोंमेंसे पानीके झरने क्या नष्ट होगए? वल्कलवाले वृक्षोंमेंसे रससहित फलवाली शाखा क्या ध्वस्त होगई ? जो अनम्र खल जिन्होंने बडे कष्टसे कुछ धन उत्पन्न किया उसके गर्वरूपी वायुसे भौंहरूपी लता जिनकी नाचती हैं उनका मुख देखते हैं अर्थात् उनके मुखके दर्शनको त्यागकर सत्पुरुष पहाडोंमें क्यों न बसैं ? ॥ ६९ ॥

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ॥
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः ॥ ७० ॥

( सं० टी० ) गंगेति । मनुष्या यत्सावमानपरपिण्डरता वर्तन्ते तत्किं हिमवतः स्थानानि प्रलयं गतानि किम्भूतानि हिमवतः स्थानानि गंगातरंगकणशीकरशीतलानि गंगायास्तरंगाः गंगातरंगास्तेषां कणशीकरैः शीतलानि गंगातरंगकणशीकरशीतलानि पुनः किम्भूतानि स्थानानि विद्याधराध्युषितचारुशिलातलानि विद्याधरैरध्युषितानि अधिष्ठितानि चारूणि शिलातलानि येषां तानि एवंविधस्थानानि चेत् स्युस्तदा परतिरस्कारपिण्डरता नराः किं भवेयुः एतावता परावमानान्येव स्थानानि सञ्चितानि॥७०॥

( भा० टी० ) गंगाके तरंगोंके जलकी बिन्दुओंके छींटोंसे जो शीतल होरहेहैं जहां विद्याधर ठौर २ सुंदर पत्थरोंकी चट्टानोंपर बैठे हैं ऐसे हिमाचलके स्थानोंका क्या प्रलय होगया है जो अपमान सहके भी पराये दिये ग्रासमें मनुष्य रत रहते हैं ॥ ७० ॥

यदा मेरुः श्रीमान्निपतति युगान्ताग्निनिहतः
समुद्राः शुष्यंति प्रचुरनिकरग्राहनिलयाः ॥

धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्त्ता करिकलभकर्णाग्रचपले ॥ ७१ ॥

( सं० टी० ) यदेति । यदा श्रीमान्मेरुः युगांताग्निनिहतो निपतति समुद्राः शुष्यंति किम्भूताः समुद्राः प्रचुरनिकरग्राहनिलयाः प्रचुराश्च ते निकराः समूहाः ग्राहास्तेषां ग्राहाणां जलचरजीवानां निलयाः येषु ते प्रचुरनिकरग्राहनिलयाः अपि पुनः धरा वसुन्धरा अन्तं गच्छति विलयं गच्छति किंभूता धरा धरणिधरपादैर्धृतापि अवलम्बिता तदा शरीरे का वार्ता किम्भूते करिकलभकर्णाग्रचपले करिकलभानां कर्णाग्रवच्चपलं तस्मिन् ॥ ७१ ॥

( भा० टी० ) प्रलयकालकी अग्निका मारा जब श्रीमान् सुमेरु पर्वत गिर पडता है और बडे २ मगर और ग्राहोंके स्थान समुद्र जब सूख जाते हैं और पर्वतोंके पगसे दबीहुई पृथ्वी भी नाश हो जाती है तब हाथीके बच्चोंके कानके कोरके समान चंचल मनुष्यके शरीरकी क्या गणना है अर्थात् यह तो अवश्य नाश होगा ॥ ७१ ॥

एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः ॥
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ७२ ॥

( सं० टी० ) एकाकीति । हे शम्भो ! अहं तादृशः कदा भविष्यामि कथंभूतोऽहंम् एकाकी अद्वितीयः पुनः किम्भूतः निःस्पृहः पुनः किम्भूतः शांतः पुनः किंभूतः पाणिः पात्रं भाण्डं यस्य सः पुनः कथंभूतः दिगंबरः दिश एव अम्बरं वस्त्रं यस्याऽसौ पुनः किंभूतः कर्मनिर्मूलनक्षमः कर्मणां निर्मूलनं कर्मनिर्मूलनं तत्र क्षमः कर्मनिर्मूलनक्षमः ॥ ७२ ॥

( भा० टी० ) असंग इच्छारहित और शान्तरूप हाथहीका पात्र बनाये दिगंबर और कर्मोंकी जड उखाडनेमें समर्थ, हे शिव ! ऐसे हम कब होंगे ॥ ७२ ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ॥

संमानिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ७३ ॥
जीर्णा कंथा ततः किं सितममलपटं पट्टसूत्रं ततः किं
एका भार्या ततः किं हयकरिसुगणैरावृतो वा ततः किम्॥
भक्तं भुक्तं ततः किं कदशनमथ वा वासरांते ततः किं
व्यक्तज्योतिर्नवांतर्मथितभवभयं वैभवं वा ततः किम् ७४

( सं० टी० ) प्राप्ता इति। श्रियो लक्ष्म्यः प्राप्तास्ततः किम् किंभूताः श्रियः सकलकामदुघाः सर्वमनोरथदोग्ध्र्यः विद्विषतां शिरसि मस्तके पदं दत्तं ततः किम् प्रणयिनः स्नेहिनः विभवैः धनैः सम्मानितास्ततः किम् तनुभृतां प्राणिनां तनुभिः कल्पं स्थितं ततः किम् एतस्य निर्ममतैव वरम् ॥ ७३ ॥ ७४ ॥

( भा० टी० ) इन नश्वर शरीरधारियोंने सब कामनाओंकी दुहनेवाली लक्ष्मी पाई तो क्या? शत्रुओंके सिरपर पग दिया तो क्या? धनसे मित्रोंका सन्मान किया तो क्या? फिर इस देहसे कल्प भर जिये तो क्या? अर्थात् परलोक न बनाया तो कुछ न किया ॥ पुरानी गुदडी धारण की तो क्या? उज्ज्वल निर्मल वस्त्र वा पीतांबर धारण किया तो क्या? एकही स्त्री पास रही तो क्या? अथवा घोडे हाथी सहित करोड स्त्रियां रहीं तो क्या? अच्छे व्यञ्जन भोजन किये वा कुत्सित अन्न सायंकालको खाये तो क्या? जिससे भवभय नष्ट हो जाय ऐसी ब्रह्मकी ज्योति हृदयमें न जानी तो बडा विभव पाया ही तो क्या? ॥ ७३ ॥ ७४ ॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः ॥
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमार्थनीयम्[१] ॥ ७५ ॥

---

१ परमर्थनीयामिति पाठान्तरम् ।

( सं०टी० ) भक्तिरिति । अतः परं किं वैराग्यमस्ति तत्किम् भक्तिर्भवे महेशे अन्यच्च हृदिस्थं प्राणिनामंतःस्थं मरणजन्मभयम् अन्यच्च बंधुषु स्नेहो न अन्यच्च मन्मथजाः कामोद्भवा विकारा न अन्यच्च वनांताः विजनाः जनरहिताः पु० किं० वनांताः संसर्गदोषरहिताः संसर्गात् दोषः संसर्गदोषस्तेन रहिताः संसर्गदोषरहिताः अतः परं वैराग्यं किमपि नास्ति किम्भूतं वैराग्यं परमार्थनीयं परमतत्त्वयुतम् ॥ ७५ ॥

( भा० टी० ) सदाशिवकी भक्ति हो जन्म मरणका भय हृदयमें हो बन्धुवर्गमें स्नेह न हो कामदेवका विकार मनसे दूर हो संसर्गदोषसे छूटे निर्जन वनमें बैठे हों इससे अधिक और क्या वैराग्य है जो ईश्वरसे माँगने-योग्य है अर्थात् यही वैराग्य है ॥ ७५ ॥

तस्मादनन्तमजरं परमं विकासि
तद् ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ॥
यस्यानुषंगिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ७६ ॥

( सं० टी० ) तस्मादिति । हे जनाः ! यदि यूयं चेतनाः स्थ तत्तस्माद्ब्रह्म वाञ्छत कथंभूतं ब्रह्म अन्तरहितम् अजरं जरावार्जितं पुनः किं ब्रह्म परमम् विकासि यस्य परब्रह्मणः इमे भुवनाधिपत्यभोगादयः अनुषंगिणो भवन्ति अनुयायिनो वर्तंते किम्भूता भुवनाधिपत्यभोगादयः कृपणलोकमताः रक्षोजनविभ्रमाः ॥ ७६ ॥

( भा० टी० ) जिस ब्रह्मके लेशमात्र आनन्द पानेवालोंके निकट त्रिभुवनके राजाओंका भोग विलास मूर्खोंके योग्य ठहरता है अतएव उसी अनन्त अजर और सर्वोत्तम शोकरहित ब्रह्मकी चिंतवन करो इन विकल्पोंसे क्या फल है अर्थात् देहादि अहंभाव त्यागके ब्रह्मकी चिंता करो ॥ ७६ ॥

पातालमाविशसि यासि नभो विलंघ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ॥

भ्रान्त्यापि जातु विमलं कथमात्मनीतं
तद्ब्रह्म न स्मरसि निर्वृतिमेषि येन ॥ ७७ ॥

( सं० टी० ) पातालमिति । रे मूढ मानस ! पातालमाविशासि अन्यच्च नभः आकाशं विलंघ्य यासि अन्यच्च दिङ्मण्डलं भ्रमासि केन चापलेन जातु कदाचित् भ्रांत्या तद्ब्रह्म कथं न स्मरसि येन ब्रह्मणा निर्वृतिमेषि मुक्तिं प्राप्नोषि किं ब्रह्म आत्मनीतम् आत्मनिहितं पुनः किं विमलं निर्मलम् ॥ ७७ ॥

( भा० टी० ) हे चित्त तू अपनी चंचलतासे पातालमें प्रवेश करता है आकाश उलंघकर ऊपर जाता है और सब दिशाओंमें भ्रमण करताहै पर भूले भी कदाचित् अपने हृदयमें स्थित विमल ब्रह्मका नहीं स्मरण करता है कि, जिसके स्मरणसे परमानन्दको प्राप्त हो ॥ ७७ ॥

रात्रिः सैव पुनः स एव दिवसो मत्वा बुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ॥
व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना
संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे॥७८॥

( सं० टी० ) रात्रीरिति । अहो इति दुःखे अमुना एवंविधेन संसारेण कदर्थिताः मोहान्मौढ्यात्कथं न लज्जामहे । कैः व्यापारैः ! किंभूतैः व्यापारैः पुनरुक्तभुक्तविषयैः पुर्नविहितानि पुनरुक्तानि यानि भुक्तानि भोजनानि अन्यच्च विषयाः पुनःपुनरुक्ताः तैर्बुधाः पण्डिता जन्तवः प्राणिन उद्यमिनः उद्यमवंतो धावंति किम्भूताः जन्तवः तथैव पुनःपुनः निभृतप्रारब्धवत्तत्तत्क्रियाः वारंवारं निभृताः प्रारब्धास्तत्तत्क्रियाः । यैस्ते किं कृत्वा तां रात्रिं मत्वा चान्यत्पुनस्तथैव दिवसं मत्वा ज्ञात्वा यतः "पुनरपि रजनी पुनरपि दिवसः पुनरपि सायं पुनरपि वर्षम् । पुनरपि वृद्धः पुनरपि बालः पुनरपि याति समेति च कालः" एवंविधं कालस्य स्वरूपं ज्ञात्वा तस्मात्संवत्सराद्विरक्तिरेव न भवतीति व्रीडा ॥ ७८ ॥

( भा० टी० ) वही रात और दिन नित्य होतेहैं यह जानकेभी बुद्धिमान् मनुष्य उद्योग करते हुये उसी प्रतिदिनकी रीतिसे यथार्थ तिस २

कार्यका प्रारंभ करके वारंवार कहे और भोगेहुये हैं विषय जिनमें ऐसे २ व्यापरोंसे जहां तहां दौडतेहैं इस पूर्वोक्त प्रकारके इस संसारसे निंदित अर्थवालेभी हम मोहसे लज्जाको प्राप्त नहीं होते ॥ ७८ ॥

मही रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः॥
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ७९ ॥

( सं० टी० ) महीति । शांतो मुनिः सुखं यथा भवति तथा शेते यस्य मुनेः मही शय्या पृथ्वी शयनं यस्य मुनेर्विपुलम उपधानं भुजलता चान्याद्वितानम् आकाशं व्यजनमनुकूलः शीतलः पवनः व्यजनं तालवृंतं चान्यचन्द्रः स्फुरद्दीपः चान्याद्विरति-वनितासंगं प्रति उदितः मुनिः क इव नृप इव यथा नृपः महीशय्यः पृथ्वीशयन-शय्यो भवति अन्यच्च विपुलोपधानो भवति विस्तीर्णगण्डुको भवति चान्यदाकाशं प्रति मस्तकोपरि वितानं भवति चान्यद्व्यजनानिलेन वीजितो भवति अन्यच्च स्फुरद्दीपो भवति अन्यच्च वनितासंगं प्रति उदितो भवति किंभूतो मुनिः चान्यन्नृपः अतनुभूतिः अतन्वी भूतिर्विभूतिर्यस्य पक्षे लक्ष्मीः ॥ ७९ ॥

( भा० टी० ) भूमिही जिसकी सुन्दर शय्या है भुजाही सिरहानी (तकिया) आकाशही चँदोवा अनुकूल वायुही पंखा और चन्द्रमाही प्रकाशमान दीपक है इन सामग्रियोंसे विरक्ततारूपी स्त्रीके संग आनन्दसे शान्त पुरुष सुखपूर्वक बडे ऐश्वर्यवान् राजाओंके समान सुखसे शयन करताहै ॥ ७९ ॥

त्रैलोक्याधिपतित्वमेव विरसं यस्मिन्महाशासने
तल्लब्ध्वासनवस्त्रमानघटने भोगे रतिं मा कृथाः ॥
भोगः कोपि स एक एव परमो नित्योदितो जृम्भते
यत्स्वादाद्विरसा भवन्ति विषयास्त्रैलोक्यराज्यादयः॥८०॥

( सं० टी० ) त्रैलोक्येति । हे आत्मन् ! तत्परब्रह्म लब्ध्वा भोगे रतिं मा कृथाः यस्मिन्परब्रह्मणि एव निश्चयेन त्रैलोक्याधिपतित्वं विरसं वर्तते किंभूते भोगे आसनवस्त्र-मानघटने आसनं सिंहासनसुखासनादि वस्त्राणि चीरांशुकपट्टदुकूलादीनि मानं महत्त्वा-स्तित्वमानादि तेषां घटनम् आसनवस्त्रमानघटनं तस्मिन् एवंविधे भोगे का रतिः कोपि संयोगः एक एव परम उत्कृष्टः नित्योदितः सन् जृंभते यत्स्वादात् यस्य ब्रह्मणो रसास्वादात् त्रैलोक्यराज्यादयो विषया विरसा भवन्ति मोक्षदायकत्वात् ॥ ८० ॥

( भा० टी० ) हे जीव! जिस परब्रह्म ज्ञानके आगे त्रैलोक्यका राज्य फीका होजाता है उसे प्राप्त होकर भोजन वस्त्र और मानके लिये भोगोंमें प्रीति मत कर वही एक भोग सबसे श्रेष्ठ और नित्य उदित और प्रकाशित है जिसके स्वादके सन्मुख त्रैलोक्यराज्य आदि सब ऐश्वर्य नीरस हो जाते हैं ॥ ८० ॥

**किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः**
**स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ॥**
**मुक्त्वैकं भवबन्धदुःखरचनाविध्वंसकालानलं**
**स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ८१ ॥**

( सं०टी० ) किमिति । वेदैः किं पुराणपठनैः शास्त्रैर्महाविस्तरैः महान् विस्तारो येषां ते तैः कर्मक्रियाविभ्रमैः किम्भूतैः स्वर्गग्रामकुटीनिवासफलदैः स्वर्गग्रामस्यकुटी स्वर्ग-ग्रामकुटी तस्यां निवासफलं ददतीति स्वर्गग्रामकुटीनिवासफलदाः तैः एकं स्वात्मानन्द-पदप्रवेशकलनं स्वकीयो योऽसौ आत्मा स्वात्मा तस्य यदानन्दपदं स्वात्मानन्दपदं स्थानं तस्मिन् यः प्रवेशः तस्य कलनं ज्ञानं पुनः कथंभूतं भवबन्धदुःखरचनाविध्वंसकालानलं भवस्य संसारस्य यो बन्धः तस्य यानि दुःखानि तेषां विध्वंसो नाशः तद्विषये कालानलं प्रलयाग्निम् एतादृशम् एकं ज्ञानं मुक्त्वा त्यक्त्वा शेषैर्वेदादिभिः किं न किमपीत्यर्थः । शेषाः क्रिया वणिग्वृत्तयो वणिगाचाराः ॥ ८१ ॥

( भा० टी० ) श्रुति, स्मृति, पुराण और बडे विस्तारपूर्वक शास्त्रोंके पढनेसे क्या फल है और स्वर्गरूपी ग्राममें कुटी बनाके रहना ही जिसका फल है ऐसे कर्मकांडकी कर्त्तव्यताके विभ्रमसे क्या

है संसारबंधनके दुःखरचनाके विध्वंस करनेके हेतु प्रलयाग्निकी सदृश ब्रह्मानंदपदमें प्रवेशके एक उद्योगके विना और सब शेष वणिज (वैश्योंका) व्यापार है ॥ ८१ ॥

**आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-**
**रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः ॥**
**कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं**
**ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम्॥८२**

( सं० टी० ) आयुरिति । हे उत्तमाः ! ब्रह्मणि परब्रह्मणि आसक्तचित्ताः भवत यूयम् किं कर्तुं भवभयाम्भोधिपारं तरीतुम् भवभयांभोधेः पारः भवभयाम्भोधिपारस्तं शेषं समस्तमस्थिरं किं किम् आयुःकल्लोललोलं समुद्रकल्लोलचपलं यौवनश्रीः कतिपयदिवसस्थायिनी कतिपयदिवसान् स्थातुं शीलं यस्याः कतिपयदिवसस्थायिनी अर्थाः संकल्पकल्पाः संकल्पतुल्याः भोगपूराः घनसमयतडिद्विभ्रमाः घनसमयतडिद्वद्विभ्रमो येषां ते घनसमयतडिद्विभ्रमाः प्रियाभिः प्रणीतं यत्कण्ठाश्लेषोपगूढं तदपि च न चिरं तस्मात्कारणात् परं ब्रह्म एव शाश्वतम् ॥ ८२ ॥

( भा० टी० ) आयुष्य जलतरंगसी चंचल है यौवनअवस्थाकी शोभा अल्पकाल रहनेवाली है धन मनके संकल्पसेभी क्षणिक है भोगके समूह वर्षाकालके मेघकी बिजलीसे चंचल हैं और प्यारी स्त्रीको गलेसे लगाना बहुत दिन स्थिर नहीं रहता इसलिये संसारके भयरूपी समुद्रसे पार होनेके लिये ब्रह्ममें चित्तको लीन करो ॥ ८२ ॥

**ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ॥**
**शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥ ८३ ॥**

( सं० टी० ) ब्रह्माण्डमिति । मनस्विनो जितेंद्रियस्य ब्रह्माण्डमंडलीमात्रं किं लोभाय जायते अपि तु न ब्रह्माण्डस्य मंडली ब्रह्माण्डमण्डली सैव मात्रा यस्य तत् अब्धेः समुद्रस्य शफरीस्फुरितेन मत्सीवल्गितेन जातु कदाचित् क्षुब्धता क्षोभता जायते अपि तु न तथा मनस्विनः पुरुषस्य ब्रह्माण्डमण्डलीमात्रं लोभाय न जायते॥८३॥

( भा० टी० ) मनस्वी अर्थात् ब्रह्मविचारवान्के लुभानेको ब्रह्माण्ड-मण्डल तुच्छ है मछलीके उछलनेसे समुद्र नहीं उमगता तात्पर्य यह है कि, ब्रह्मज्ञानीका चित्त समुद्रवत् गंभीर है त्रैलोक्यकी संपत्ति उसके आगे छोटी मछली है ॥ ८३ ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ॥
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म तनुते ॥८४॥

( सं० टी० ) यदेति । यदा यस्मिन् प्रस्तावे अज्ञानम् आसीत्तदा इदमशेषं जगदपि मया नारीमयं दृष्टं किम्भूतमज्ञानं स्मरतिमिरसंस्कारजनितं स्मरस्य कन्दर्पस्य यत्तिमिरम् अंधकारं तस्य संस्कारेण पूर्वभवोद्भवपरिणामेन जनितम् इदानीं सांप्रतम् अस्माकं समीभूता दृष्टिः समतापरिणामेनालंकृतं चेतः त्रिभुवनमपि ब्रह्म तनुते परब्रह्म-स्वरूपं विस्तारयति किंभूतानामस्माकं पटुतरविवेकाञ्जनजुषां प्रकृष्टपटुर्योऽसौ विवेकः पटुतरविवेकः पटुतरविवेक एवांऽजनं जुषन्ति ते पटुतरविवेकांजनजुषस्तेषाम् अथ यथास्थितसंसारस्य स्वरूपं पश्यामः ॥ ८४ ॥

( भा० टी० ) जब हममें कामदेवके अंधकारसे पैदाहुवा अज्ञान था उस समय यह संपूर्ण जगत् स्त्रीरूपही दीखता था अर्थात् स्त्रीमें अत्यंत आसक्त थे अब अत्यंत कुशल विवेकरूपी अंजन लगानेसे हमारी दृष्टि समान होगयी है इससे वह दृष्टि तीनों भुवनोंकोभी ब्रह्मरूप समझती है ॥ ८४ ॥

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यः साधुसमागमः शमसुखं काव्येषु रम्याः कथाः ॥
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित्पुनः ॥८५॥

( सं० टी० ) रम्या इति । चंद्रमरीचयो रम्याः वनांतस्थली रम्या किंभूता वनांतस्थली तृणवती शाद्वला साधुसमागमो रम्यः शमसुखं रम्यं काव्येषु कथा रम्या अन्यच्च

प्रियाया मुखं रम्यं किंभूतं मुखं कोपोपाहितबाष्पबिंदुतरलं कोपोपाहितः कोपेन निवेशितः यो बाष्पबिंदुस्तेन तरलं चञ्चलं मुखं पुनः अनित्यतामुपगते संप्राप्ते चित्ते सर्वं न किंचित् रम्यम् ॥ ८९ ॥

(भा०टी०) चन्द्रमाकी किरणें भली लगतीं थीं हरिततृणवाली वनभूमि सुहावनी देख पडती थी मित्रोंका समागम अच्छा लगता था शृंगाररसवाली काव्यकथा प्यारी जानपडती थी क्रोधके आँसुओंके बूँदसे चंचल और मनभावन प्यारीका मुख सुंदर लगता था पर जब संसारकी अनित्यता चित्तमें निश्चित हुई तब सब रमणीयता जाती रही ॥ ८९ ॥

भिक्षाशी जनमध्यसंगरहितः स्वायत्तचेष्टः सदा
दानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ॥
रथ्याक्षीणविशीर्णजीर्णवसनैः संप्राप्तकन्थासखि-
र्निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥८६॥

( सं० टी० ) भिक्षेति । एवंविधस्तपस्वी जनः कश्चिद्विरलः स्थितो वर्त्तते कीदृशः जनः भिक्षाशी भिक्षाभोजनः पुनः कीदृशः जनमध्यसंगरहितः पुनः कीदृशः सर्वदा स्वायत्तचेष्टः स्वाधीनमानसपरिणामः पुनः कीदृशः जनः दानादानाविरक्तमार्गनिरतः दानं चादानं च दानादाने तयोर्विरक्तमार्गे निरतः पुनः कीदृशः रथ्याक्षीणविशीर्णजीर्णवसनैः संप्राप्तकंथासखिः रथ्यायां क्षीणानि विशीर्णानि जीर्णानि च यानि वसनानितैः कृत्वा संप्राप्ता कंथा सखी सहायिनी येन सः पुनः कीदृशः जनः निर्मानः पुनः कीदृशः निरहंकृतिर्निरहंकारः पुनः कीदृशः जनः शमसुखाभोगैकबद्धस्पृहः शमस्य सुखं शमसुखं तस्याभोगे विस्तारे एका बद्धा स्पृहा येन सः ॥ ८६ ॥

( भा० टी० ) भीख मांगके खाना लोगोंके मध्यमें असंग रहना स्वाधीन चेष्टा करना देने और लेनेसे निवृत्तिमार्गमें रत रहना मार्गमें पडे फटे पुराने वस्त्रके टुकडेकी गुदडी ओढना मान और अहंकारसे रहित होना शमसुख अर्थात् ब्रह्मानन्दहीमें इच्छा रखना इस प्रकारसे कोईही तपस्वी स्थिर रहता है ॥ ८६ ॥

---

१ कन्थाधर इति पाठान्तरम् ।

**मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल**
**भ्रातर्व्योम निबद्ध एव भवतामेष प्रणामाञ्जलिः ॥**
**युष्मत्संगवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-**
**ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ८७ ॥**

( सं० टी० ) मातरिति । हे मातः मेदिनि हे तात मारुत हे सखे तेजः हे सुबंधो जल हे भ्रातर्व्योम भवतां पंचतत्त्वानामेषः प्रणामांजलिः बद्धोऽस्ति तथा विधेयं यथा परे ब्रह्मणि लीये लीनो भवामि कथंभूतोऽहं युष्मत्संगवशोपजातसुकृतोद्रेकस्फुरन्निर्मलज्ञानापास्तसमस्तमोहमहिमा युष्माकं संगवशस्तेन युष्मत्संगवशेन उपजातो निराकृतः समस्तोद्रेकस्तस्मात्स्फुरन्निर्मलज्ञानेन अपास्तो निराकृतः समस्तो मोहमहिमा येन सः ॥ ८७ ॥

( भा० टी० ) हे माता पृथ्वी, हे पांचोंतत्त्वोंके पिता वायु, हे सखा तेज, हे बन्धु जल, और भाई आकाश, तुम्हें हाथ जोड अन्त समय प्रणाम करताहूं तुम्हारे संगसे पुण्य बना पुण्य उदय होनेसे ज्ञान निर्मल हुआ और ज्ञान निर्मल होनेसे मोहमहिमा दूर हुई अब मैं परब्रह्ममें लय होताहूँ अर्थात् पृथ्वी आदि पंचतत्त्वरचित देहको परब्रह्मज्ञानमें सहायक समुझ प्रणाम करताहूं क्यों कि फिर तुमसे भेंट न होगी ॥ ८७ ॥

**यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा**
**यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ॥**
**आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-**
**न्प्रोद्दीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ॥ ८८ ॥**

( सं० टी० ) यावदिति । विदुषा पण्डितेन आत्मश्रेयसि मोक्षे तावदेव महान्प्रयत्नः कार्यः यावदिदं कलेवरगृहं शरीरमंदिरं च स्वस्थं वर्तते समाधानप्रायणं वर्तते चान्यच्चावत् जरा दूरे वर्तते अन्यदिंद्रियशक्तिः अप्रतिहता वर्तते चान्यच्चावदायुषः क्षयो नास्ति तावदेव स्वहिते यत्नः कार्यः भवने गृहे प्रोद्दीप्ते सति निश्चितं कूपखननं प्रत्युद्यमः कीदृशः नहि गृहे प्रदीप्ते सति कूपः खनितुं शक्यते ॥ ८८ ॥

( भा० टी० ) जबतक शरीर अपना पुष्ट और नीरोग है और वृद्धावस्था दूर है जबलों इन्द्रियोंकी शक्ति न्यून न हुई और आयुष्यभी क्षीण नहीं हुई है तबतक बुद्धिमान् पुरुषको उचित है कि, अपने कल्याणका यत्न अच्छीभाँतिसे करले जब घर जलने लगा तब कूप खोदनेके उद्योगसे क्या होता है ॥ ८८ ॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ॥
कान्ताकोमलपल्लवाधररसः पीतो न चंद्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ८९ ॥

( सं० टी० ) नेति । भुवि पृथिव्यां विद्या न अभ्यस्ता किंभूता विद्या वादिवृन्ददमनी पुनः किंभूता विद्या विनीतोचिता विनयवतः पुरुषस्य योग्या खड्गाग्रैः कृपाणधाराभिः यशो नाकं स्वर्गलोकं प्रति न नीतं कीदृशैः खड्गाग्रैः करिकुम्भपीठदलनैः करिणां कुंभपीठदलने शीलं येषां ते तथा तैश्चान्यचंद्रोदये कांताकोमलपल्लवाधररसो न पीतः अहो इति खेदे तारुण्यं यौवनं निष्फलमेव गतं किंवत् शून्यालये दीपवत् ॥ ८९ ॥

( भा० टी० ) नम्रजनोंकी प्रसन्नताके योग्य और वादियोंके समूहको दमन करनेहारी विद्याका अभ्यास हमने न किया और तलवारकी धारसे हाथीके मस्तकका पृष्ठभाग काटके स्वर्गलों अपना यश न पहुँचाया और चाँदनी रातमें सुन्दर स्त्रीके कोमल अधरपल्लवका रसभी न पान किया तो इस भूमिपर हमारी युवा अवस्था योंही बीती जैसे शून्यमंदिरमें दीपक जलकर आपही ठंडा हो जाताहै ॥ ८९ ॥

ज्ञानं सतां मानमदादिनाशनं
केषांचिदेतन्मदमानकारणम् ॥
स्थानं विविक्तं यमिनां विमुक्तये
कामातुराणामतिकामकारणम् ॥ ९० ॥

( सं० टी० ) ज्ञानमिति । सतां सत्पुरुषाणां ज्ञानं मानमदादिनाशनं भवति केषांचिदधमानाम् एतज्ज्ञानं मदमानकारणं भवति उक्तमेवार्थं कविर्दृष्टांतेन द्रढयति यमिनां मुनीनां विविक्तं स्थानम् एकांतप्रदेशः विमुक्तये भवति संसारच्छेदनाय स्यात् कामातुराणां पुरुषाणां विविक्तं जनरहितं स्थानम् अतिकामकारणं भवति कामविकाराय स्यात् ॥ ९० ॥

( भा० टी० ) सत्पुरुषको ज्ञान मानमदआदि नष्ट करनेके लिये है और वही ज्ञान दुर्जनोंको मद मान उत्पन्न करता है जैसे एकांतस्थान संयमी पुरुषोंको मुक्ति साधनका हेतु होता है और कामातुरोंको कामसाधनका कारण होता है ॥ ९० ॥

**जीर्णा एव मनोरथाः स्वहृदये यातं जरां यौवनं**
**हन्तांगेषु गुणाश्च वंध्यफलतां याता गुणज्ञैर्विना ॥**
**किं युक्तं सहसाभ्युपैति बलवान् कालः कृतांतोऽक्षमी**
**ह्या ज्ञातं स्मरशासनांघ्रियुगलं मुक्त्वास्तिनान्या गतिः९१**

( सं०टी० ) जीर्णा इति । मनोरथाः स्वहृदये जीर्णा एव यौवनं जरां प्राप्तं हंतेति खेदे चान्यद्गुणा वन्ध्यफलतां गुणज्ञैर्विना याताः अक्षमी बलवान् कालो यमः सहसाऽभ्युपैति हि निश्चितम् आसमंतात् भावेन ज्ञातं त्रिपुरांतकांघ्रियुगलं मुक्त्वा अन्या गतिर्नास्ति किंभूतः कालः कृतांतः कृतः अंतो येन स कृतांतः ॥ ९१ ॥

( भा० टी० ) सब मनोरथ हृदयहीमें जीर्ण होगये कोई भी सिद्ध न हुये युवा अवस्थाभी व्यतीत हुई और गुणग्राहकोंके विना सब गुण निष्फल होगये अब सर्वनाशक बलवान् काल सहसाकर निकट चला आता है इससे अब यह जाना कि, कामनाशक शिवजीके दोनों चरण छोड और कोई दूसरी गति नहीं ॥ ९१ ॥

**तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि**
**क्षुधार्तः सञ्छालीन् कवलयति शाकादिवलितान् ॥**

प्रदीप्ते कामाग्नौ सुदृढतरमाश्लिष्यति वधूं
प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥ ९२ ॥

( स० टी० ) तृषेति । प्राणी सलिलं पानीयं पिबति क्व सति आस्ये वदने तृषा शुष्यति सति किंभूतं सलिलं स्वादु सुरभि प्राणी क्षुधार्तः सन् शालीन् कवलयति कीदृशान् शालीन् शाकादिवलितान् ।किंभूतः प्राणी कामाग्नौ प्रदीप्ते सति सुदृढतरं यथा भवति तथा वधूं भार्यामाश्लिष्यति अलिंगति जनः प्राणी व्याधेः प्रतीकार उपचारः सुखमिति विपर्यस्यति विपर्यासं करोति ॥ ९२ ॥

( भा० टी० ) जब मनुष्योंका कंठ प्याससे सूखने लगता है तब शीतल सुगंधित जल पीता है जब क्षुधासे पीडित होता है तो शाक आदि सामाग्रियोंके साथ चावलोंका भोजन करता है जब कामदेवकी अग्नि प्रचंड होती है तब सुन्दर स्त्रीको हृदयसे लगाता है विचारो तो यह एक २ व्याधिकी औषधि है परन्तु मनुष्योंने इसे उलटा सुख ही समुझलिया९२॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां ध्येये ध्यानं नियोज्य क्षितिधरकुहरग्रावपर्यंकमूले॥ आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात्स्मरारे दुःखान्मोक्ष्ये कदाहं तव चरणरतो ध्यानमार्गैकनिष्ठः ॥ ९३ ॥

( सं० टी० ) स्नात्वेति । हे स्मरारे कदा दुःखान्मोक्ष्ये किं कृत्वा गांगैः पयोभिः स्नात्वा हे विभो ! चान्यत् त्वां शुचिकुसुमफलैरर्चयित्वा क्षितिधरकुहरग्रावपर्यंकमूले ध्येये कर्माणि ध्यानं निवेश्य क्षितिधरस्य कुहरं क्षितिधरकुहरं तस्य यो ग्रावा स एव पर्यंकः तस्य यन्मूलं तस्मिन् किंभूतोऽहम् आत्मारामः पुनः किंभूतः फलाशी पुनः किम्भूतः त्वत्प्रसादाद्गुरुवचनरतः पुनः किंभूतः ध्यानमार्गैकनिष्ठः पुनः किम्भूतः तव चरणरतः ॥ ९३ ॥

( भा० टी० ) हे स्वामी ! कामदेवके शत्रु शिव ! मैं गंगाजलसे स्नान कर सुन्दर पवित्र फूल फलोंसे तुझे पूजकर पर्वतकी कंदरामें पत्थरकी चट्टा-

नकी शय्यापर बैठ ध्यानयोग्य तुम्हारी मूर्तिमें ध्यानावस्थित हो गुरुके वचन मान आत्माराम और फलाहारी होके तुम्हारी कृपासे कब मैं इस दुःखसे आपकी दयासे छूटूंगा ॥ ९३ ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारंगाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ॥
येषां निर्झरमम्बुपानमुचितं रत्येव विद्यांगना
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः॥९४॥

( सं० टी० ) शय्येति । येषां पुरुषाणां एवंविधा स्थितिः तान् अहम् एवं मन्ये ते एव परमेश्वराः सा का स्थितिः शैलशिला शय्या गिरिगुहा गृहं तरूणां त्वचः वस्त्रं सारंगाः सुहृदः ननु निश्चितं क्षितिरुहाणां वृक्षाणां कोमलैः फलैर्वृत्तिः निर्झरमंबुपानम् एव निश्चयेन रत्येव सहोचिता अंगना इव विद्या येषामिति ते ईश्वराः यैः शिरसि सेवांजलिर्न बद्धः ॥ ९४ ॥

( भा० टी० ) पर्वतकी चट्टान जिनकी शय्या, और कंदराही घर है, वृक्षोंके वल्कलही वस्त्र और वनके हिरनही मित्र हैं वृक्षोंके कोमल फलादि भोजनसे जीवन और झरनेका स्वच्छ जल पान है, विद्यारूपी स्त्रीहीसे जिनकी प्रीति है उन पुरुषोंको हम परमेश्वर मानतेहैं जिन्होंने सेवा करनेके हेतु औरोंको प्रणाम न किया ॥ ९४ ॥

सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीवच्छटायां
सद्वृत्तिं कल्पयन्त्यां वटविटपिभवैर्वल्कलैः सत्फलैश्च ॥
कोऽयं विद्वान् विपत्तिज्वरजनितरुजातीव दुःश्वासि-
कानां वक्त्रं वीक्षेत दुःस्थे यदि हि न बिभृयात्स्वे कुटु-
म्बेऽनुकम्पाम् ॥ ९५ ॥

( सं० टी० ) सत्यामिति । हि निश्चितं यदि चेत् दुःस्थे स्वकीये कुटुंबे अनुकंपां कृपां न बिभृयात् यत्तदोर्नित्यः संबन्धः इति न्यायात् तदा कोयं विद्वान् अतीव

दुःश्वासिकानां नारीणां वक्त्रं वीक्षेत अपि तु कोपि न कया विपत्तिज्वरस्तेन जनिता रुक् तया कस्यां सत्यां त्रिलोकीसरिति गंगायां सत्यामेव किंभूतायां त्रिलोकीसरिति हरशिरश्चुंबिनीवच्छटायां हरशिरश्चुंबिनी ईश्वरमस्तकस्य रमणीवच्छटा वप्रदेशो यस्याः सा तस्यां पुनः किंभूतायां त्रिलोकीसारिति सद्वृत्तिं सदावरं कल्पयंत्यां प्रेरयन्त्यां कैः सत्फलैः किंभूतैः सत्फलैः वटविटपिभवैर्वटवृक्षोद्भवैः ॥ ९५ ॥

( भा० टी० ) महादेवजीका शिर जिसका तट है और जो गंगा वटकी डालियोंके वल्कल और उत्तम २ फलोंसे भलीप्रकार निर्वाह करसकतीहै ऐसी श्रीगंगाजीके विद्यमान रहते और यदि अपने कुटुंबपर दया न करै तो ऐसा कौन विद्वान् है जो ऐसी स्त्रियोंके मुखको देखै जो विपत्तिके ज्वरसे पैदाहुये लंबे २ श्वासोंको लेती है अर्थात् कुटुंब बढ़ानेकी इच्छाही उक्त स्त्रियोंका मुख दिखाती है नहीं तो गंगातटपर ही सर्वानन्द है॥९५॥

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः
कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ॥
आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते
तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते॥९६॥

( सं०टी० ) उद्यानेष्विति । तां काशीं परिहृत्य परित्यज्य हंत इति खेदे विबुधैः किम् अन्यत्र स्थीयते अपि तु न यस्यां काश्याम् उद्यानेषु विचित्रभोजनविधिः चान्यत्ती व्रातितीव्रं तपः चान्यत्सुवस्त्रं कौपीनावरणं मंडनं चान्यद्यस्याम् अमितं भिक्षाटनं यस्यां काश्यां मंगलसमम् आसन्नं मरणं समुत्पद्यते तां काशीं मुक्त्वा अन्यत्र कथं स्थीयते॥९६॥

( भा०टी० ) उपवनोंमें नानाप्रकारके भोजन बनायके खाना और जहां कठिनसे कठिन तप और लँगोटी पहिननाही परम सुन्दर वस्त्र और भीख माँगनाही जहां भूषण है और मृत्यु आनाही जहां परममङ्गल उत्पन्न होता है ऐसी काशीको छोड़ पण्डितलोग अन्यत्र क्यों वसते हैं ॥ ९६ ॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ॥

**चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-**
**र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ९७ ॥**

( सं० टी० ) नायमिति । नायं ते समयः संप्रतिप्रस्तावो नास्ति यदि प्रभुः स्वामी द्रक्ष्याति तर्हि कुप्याति अधुना रहस्यं मन्त्रालोचनं स्वामी करोति स्वामी निद्राति निमीलनं कुरुते येषां धनोन्मदानां द्वारेषु इति वचः अस्ति रे चेतस्तान् प्रभूनपहाय विश्वेशितुः परमेश्वरस्य महेशस्य भवनं याहि किंभूतं भवनं निर्दौवारिकनिर्दयोक्त्यपरुषं निर्गतो दौवारिको यस्मात् तत् निर्दौवारिकं प्रतीहाररहितं निर्दयोक्त्या कठोरोक्त्याऽपरुषाः यस्मिन् तन्निर्दयोक्त्यपरुषं निर्दौवारिकं च तत् निर्दयोक्त्यपरुषं च निर्दौवारिकनिर्दयोक्त्यपरुषं तत्पुनः किंभूतं निःसीमशर्मप्रदं सीमारहितं शर्म सौख्यं प्रददातीति अतिनिर्मलसौख्यदायकम् ॥ ९७ ॥

( भा० टी० ) अभी समय नहीं महाराज एकान्तमें बैठे हैं कुछ विचार कर रहे हैं अभी सोते हैं डचोढीपरसे उठो तुम्हें बैठे देखेंगे तो प्रभु हमपर क्रोध करेंगे ऐसे वचन जिनके द्वारपर द्वारपाल बोलते हैं उन्हें त्यागकर हे चित्त ! विश्वेश्वरकी शरणमें जा जिसके द्वारपर कोई रोकनेवाला नहीं वहां निर्दय और कठोर वाक्य नहीं सुननेमें आते और जो अनंत सुखदाई है ॥ ९७ ॥

**प्रियसखि विपद्दण्डव्रातप्रतापपरंपरा-**
**तिपरिचपले चिन्ताचक्रे निधाय विधिः खलः ॥**
**मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-**
**द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ ९८ ॥**

( सं० टी० ) प्रियसखीति । हे प्रियसखि ! खलो विधिः पराङ्मुखो देवः नो जानीमः अत्र इदानीं किं विधास्यति अयं विधिः चिंताचक्रे निधाय बलात्पिण्डीकृत्य मनो भ्रमयति किंभूते चिंताचक्रे विपद्दण्डव्रातप्रतापपरंपरातिपरिचपले विपद्दण्डव्रातस्य या प्रतापपरंपरा तयाऽतिपरिचपलं तस्मिन् मनः कामिव मृदमिव विधिः क इव प्रगल्भकुलालवत् यथा प्रगल्भकुलालः मृदं मृत्तिकां बलात् पिण्डीकृत्य चक्रे निधाय भ्रमयति एतावता विपरीतं विधेः बिलसितं कोऽपि न वेत्ति ॥ ९८ ॥

(भा० टी०) हे प्यारी सखी बुद्धि ! खल अज्ञानी ब्रह्मा विपत्तियोंकी पंक्तिके समूहका जो प्रताप उसकी परंपरासे अत्यंत चंचल चिंतारूपी चक्रपर रखकर इसप्रकार हमारे मनको भ्रमाता है जैसे चतुर कुम्हार मिट्टीका पिण्ड बनाकर भ्रमाताहै और उसके अनेक पात्र बनाता है न जाने अज्ञानी ब्रह्मा इस हमारे मनके पिंडसे क्या २ बनावेगा अर्थात् इस ब्रह्माकी इच्छाको कोई नहीं जानसकता ॥ ९८ ॥

**महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि ॥ तयोर्न भेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ९९ ॥**

(सं० टी०) महेश्वर इति ॥ मे मम महेश्वरे वाथवा जनार्दने वासुदेवे वस्तुतः भेदस्य प्रतिपत्तिर्नास्ति किम्भूते महेश्वरे जगतामधीश्वरे त्रिभुवनस्याधिपतौ कीदृशे जनार्दने जगदन्तरात्मनि जगतां विश्वत्रयाणाम् अन्तरात्मा जगदंतरात्मा तस्मिन् उभयोर्देवयोर्मे मम चेतस्यन्तरं नास्ति एवं भवामि तथापि तरुणेन्दुशेखरे श्रीमहेशे मे भक्तिः ॥ ९९ ॥

(भा० टी०) जगदीश्वर महेश्वर अर्थात् शिव और जगदन्तरात्मा जनार्दन अर्थात विष्णु दोनोंमें मुझे कुछ भेदबुद्धि नहीं तथापि जिनके भालमें चंद्र विराजमान है उन्हींमें हमारी प्रीति है ॥ ९९ ॥

**रे कंदर्प करं कदर्थयसि किं कोदण्डटङ्कारवै**
**रे रे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ॥**
**मुग्धे स्निग्धविदग्धक्षेपमधुरैर्लोलैः कटाक्षैरलं**
**चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ १०० ॥**

(सं० टी०) रे इति । रे कन्दर्प ! कोदण्डटंकारवैः करं किं कदर्थयासि रे रे कोकिल ! कोमलैः कलवैः पञ्चमस्वरैः किं त्वं वृथा जल्पसि हे मुग्धे ! तव कटाक्षैरलं पूर्यताम् किंभूतैः कटाक्षैः स्निग्धविदग्धश्च मधुरश्च क्षेपो येषां तैः भवतां पूर्वोक्तानां

कृतं निखिलम् अपि व्यर्थं तस्माच्चेतश्चुम्बितचन्द्रचूडचरणध्यानामृते वर्त्तते चुम्बितं चन्द्रचूडस्य महेशस्य चरणध्यानामृतं येन तत् चुम्बितचन्द्रचूडचरणध्यानामृतम् ॥ १०० ॥

( भा० टी० ) रे कामदेव ! धनुषकी टंकारके शब्दोंसे बुरे हाथको क्यों उठाता है रे कोकिल ! तूं वृथा क्यों बोलता है तेरे पंचमस्वरसे कुछ न होगा और हे मुग्धे ( मूर्ख ) स्त्री ! तेरे स्नेहयुक्त और मधुर कटाक्षोंसेभी कुछ न होगा अर्थात् तुम सब मेरे ऊपर प्रहार नहीं करसकते क्योंकि, अब हमारे चित्तमें शिवजीके चरणारविंदको चूमकर अमृतका पान करलिया है ॥ १०० ॥

कौपीनं शतखण्डजर्ज्जरतरं कन्था पुनस्तादृशी
निश्चिन्तं सुखसाध्यभैक्ष्यमशनं शय्या श्मशाने वने ॥
मित्रामित्रसमानतातिविमलाचिन्तातिशून्यालये
ध्वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति॥१०१॥

( सं० टी० ) कौपीनमिति । योगी सर्वसंगपरित्यागी सुखं तिष्ठति किम्भूतो योगी ध्वस्ताशेषमदप्रमादमुदितः ध्वस्ता निराकृता अशेषाः मदप्रमादास्तैर्मुदितः कीदृशी कन्था पुनः तादृशी पूर्वोक्ता शतखण्डजर्जरतरा निश्चिन्तं अशनं किं भूतम्अशनं सुखसाध्यभैक्ष्यं सुखेन साध्या एवंविधा या भिक्षा तत्समुत्पन्नम् अन्यच्च शय्या श्मशाने वनांते ययापि मित्रामित्रसमानता मित्रश्च अमित्रश्च मित्रामित्री तयोः सादृश्यं सामान्यं यस्याः अथ पश्चात् शून्यालये अतिविमला निर्मला शुद्धा ध्यानलक्षणा चिन्ता अतः कारणात् योगी नित्यमुक्तः संसारे सुखं तिष्ठति ॥ १०१ ॥

( भा० टी० ) कौपीनके सौ टुकडे होके अत्यंत जर्जर हुआ है और गुदडीभी वैसीही हुई है चिंतासे रहित सुखसे मिलनेवाला भिक्षाका भोजन, श्मशानमें अथवा वनमें सोना, मित्र और शत्रुमें समान भाव, अत्यंत

शून्य घरमें शुद्ध ध्यान लगाना. इतना करनेसे जिसके संपूर्ण मद और प्रमाद नष्ट हुए हैं. ऐसा आनंदी योगी संसारमें सुखसे रहता है ॥ १०१ ॥

**भोगा भंगुरवृत्तयो बहुविधास्तैरेव चायं भव-**
**स्तत्कस्येव कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ॥**
**आशापाशशतोपशान्तिविशदं चेतः समाधीयतां**
**कामोच्छित्तिवशेस्वधामनि यदि श्रद्धेयमस्मद्वचः १०२॥**

( सं० टी० ) भोगा इति । रे लोकाः ! चेष्टितैर्नवनवविकल्पापारैः कृतं पूर्यतां यदि चेदस्मद्वचः श्रद्धेयं श्रद्धायोग्यं तदा स्वधामनि स्वकीये शरीरमन्दिरे कामोच्छित्तिवशे कन्दर्प्पजयार्थं केवलं चेतः समाधीयतां किंभूतं चेतः आशापाशशतोपशांतिविशदम् आशापाशस्य शतम् आशापाशशतं तस्योपशांत्या विशदं निर्म्मलं यतो भोगा भंगुरवृत्तयः भंगुरा विनश्वरा वृत्तिर्येषां ते किंभूताः भोगाः बहुविधा अनेकप्रकाराः एवं निश्चयेन बहुविधैर्भोगैरयं भवः संसार एव रे लोकाः ! तत्तस्मात्कारणात्कस्य कृते परिभ्रमत परिभ्रमणं कुरुत ॥ १०२ ॥

( भा० टी० ) जितने भोग हैं उनकी वृत्ति नाशवान् है उनके संसर्गसे भव है अर्थात् वारंवार जन्ममरण है यह जानकरभी हे लोगों ! किसलिये भोगरूपी चक्रमें भ्रमतेहो ऐसी चेष्टासे फल क्या मिलना है यदि हमारे वचनका विश्वास मानो तो कामनाशक शिव स्वयंप्रकाशरूप हैं उनमें जो आशापाश छेदनकर शुद्ध हो रहा है ऐसा चित्त निरन्तर लगाओ ॥ १०२ ॥

**धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-**
**मानन्दाश्रुजलं पिबन्ति शकुना निःशंकमङ्केशयाः ॥**
**अस्माकं तु मनोरथोपरचितप्रासादवापीतट**
**क्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयते ॥१०३॥**

( सं० टी० ) धन्यानामिति । धन्यानां मनुष्याणाम् एवं स्थित्या आयुः परिक्षीयते किंभूतानां धन्यानां गिरिकन्दरे निवसतां किं कुर्वतां परं ज्योतिर्ध्यायतां येषां धन्यानामानंदाश्रुजलं निःशंकं शंकारहितं शकुनाः पक्षिणः पिबंति किम्भूताः शकुनाः अंकेशयाः उत्सङ्गसमारूढाः तु पुनरस्माकमधन्यानाम् आयुरेवं मनोरथैः परिक्षीयते किम्भूतानामस्माकं प्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषाम् उपरचिता याः प्रासादवापीतटक्रीडाकाननकेलयस्तासां कौतुकं जुषंतीति प्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषः तेषाम् ॥ १०३ ॥

( भा०टी० ) जो उत्तम पुरुष पर्वतकी कंदरामें रहते और परब्रह्मकी ज्योतिका ध्यान करते हैं जिनके आनन्दके आंसू पक्षीलोग निडर हो गोदमें बैठकर पीते हैं उनको धन्य है और हमलोगोंकी तो अवस्था केवल मनोरथहीके मंदिरकी बावडीके तटमें जो क्रीडाका वन तिसमें लीलाके कौतुक करतेही क्षीण होती है तात्पर्य यह है कि, नानाप्रकार मिथ्याकल्पनाहीमें जन्म व्यतीत होता है वास्तवमें कोई मनोरथ सिद्ध नहीं होता ॥ १०३ ॥

**आघ्रातं मरणेन जन्म जरया विद्युच्चलं यौवनं**
**संतोषो धनलिप्सया शमसुखं प्रौढांगनाविभ्रमैः ॥**
**लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-**
**रस्थैर्येण विभूतिरप्यपहृता ग्रस्तं न किं केन वा॥१०४॥**

( सं० टी० ) आघ्रातमिति । एभिः प्रकारैः किं न ग्रस्तम् अन्यच्च के जना न ग्रस्ताः मरणेन जन्म आघ्रातं जरया विद्युच्चलं यौवनं स्पृष्टं धनलिप्सया संतोष अघ्रातः प्रौढांगनाविभ्रमैः शमसुखम् आघ्रातं निरस्तं मत्सरिभिर्लोकैर्गुणा आघ्राता विनाशिताः व्यालैः दुष्टसर्पैर्वनभुव आघ्राताः दुर्जनैर्नृपाः भूपाला आघ्राताः ग्रस्ता विभूतिरपि अस्थैर्येण आघ्राता अपहृता तर्हि कालेन किं किं न नष्टं किं किं न विनश्यति अपि तु सर्वं यत्येव ॥ १०४ ॥

( भा० टी० ) मृत्युने जन्मको, बुढौतीने युवा अवस्थाको, धनकी इच्छाने संतोषको, सुंदरस्त्रियोंके हावभावने शान्तिसुखको, मत्सरी ( जो-पराई बडाई न सहै ) लोगोंने गुणको सर्प और हिंस्र वनपशुओंने वनभूमिको दुर्जनोंने राजाको और चंचलताने धैर्यको, योंहीं इस संसारमें किसको नहीं ग्रास कर रक्खाहै ॥ १०४ ॥

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ॥
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसा-
त्तत्किं नाम निरंकुशेन विधिना यन्निर्मितं सुस्थितम् १०५

( सं० टी० ) आधीति । नाम इति संबोधने । तत्किं यन्निरंकुशेन दैवेन सुस्थितं निर्मितं किं तद्वद शरीरे आधिव्याधिशतैरतिशयेन आरोग्यमुन्मूल्यते तत्र आधिर्मानसी पीडा व्याधिः रोगसमुद्भवा चान्यद्यस्मिन् दैवनिर्माणे लक्ष्मीः तत्र स्थाने वर्तते व्यापदः विवृतद्वारा इवोद्घाटितकपाटा इव वर्तते अवश्यं निश्चितम् आशु शीघ्रं मृत्युर्जातं जातम् उत्पन्नम् उत्पन्नम् आत्मसात्करोति आत्मायत्तं विधत्ते अतः अस्य दैवस्य निर्माणे किमपि स्थिरं नास्तीत्यागमः ॥ १०५ ॥

( भा० टी० ) सैकडों मानसिक दैहिक रोगव्याधिने मनुष्योंकी आरोग्यताको मूलसे उखाडडालाहै जहां द्रव्य बहुत होताहै वहां विपत्ति द्वारतोडके आपडती है जो जो जन्मता है उसे मृत्यु बलात्कारसे वश अवश्य कर लेती है ऐसी कौन वस्तु है, कि, जिसे निरंकुश विधाताने बनाई है ॥ १०५ ॥

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भ-
मध्ये कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने वि-
प्रयोगः ॥ नारीणामप्यवज्ञा विलसति नियतं वृ-
द्धभावोऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं
स्वल्पमप्यस्ति किंचित् ॥ १०६ ॥

( सं०टी० ) कृच्छ्रेणेति । हे मनुष्याः ! वदत कथयत यदि चेत्संसारे स्वल्पमपि सुखं किंचिदस्ति गर्भमध्ये कृच्छ्रेण कष्टेन नियमिततनुभिः संकोचितशरीरैः स्थीयते किंभूते गर्भमध्ये अमेध्यं मध्ये यस्य तममेध्यमध्यं तस्मिन् संसारे यौवने विप्रयोगः किंभूते यौवने कान्ताविश्लेषदुःखव्यतिकरविषमे कान्ताया विश्लेषः कान्ताविश्लेषस्तस्य योऽसौ दुःखव्यतिकरस्तेन विषमः कांताविश्लेषदुःखव्यतिकरविषमः तस्मिन्नपि पुनर्नारीणामवज्ञावगणनं तेन विलसति अपि पुनर्नियतं निश्चितं वृद्धभावः यस्मादसाधुः अस्मात्कारणात् संसारे अपि सौख्यं नास्ति ॥ १०६ ॥

( भा० टी० ) अपवित्र मलमूत्रके स्थानमें बडे कष्टसे हाथ पैर बँधेहुए बालअवस्थामें गर्भ बन्दीगृहमें रहता है फिर युवाअवस्थामें स्त्रियोंके वियोगदुःखसे क्लेशित रहताहै और वृद्धावस्थामें नारियोंसे निरादर पाकर नीचा सिर किये शोचमें पडा रहता, तो हे मनुष्यो ! इस संसारमें किञ्चितमात्रभी सुख होय तो सो हमसे कहो अर्थात् सुखका लेशभी नहीं है ॥ १०६ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः ॥
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरंगचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ १०७ ॥

( सं० टी० ) आयुरिति । प्राणिनां सौख्यं कुतः कथं नृणां मनुष्याणामायुर्वर्षशतं परिमितं तस्यायुषो वर्षशतप्रमाणस्य अर्द्धं रात्रौ गतं शयानस्य ततोऽनन्तरं तस्य पञ्चाशतः अर्धस्य कदाचिदपि अधिकमर्धमपि बालत्ववृद्धत्वयोर्गतं शेषमायुर्व्याधिवियोगशोकसहितं सेवादिभिः कर्मभिर्नीयते किम्भूते जीवे जीवितव्ये वारितरंगचञ्चलतरे वारिणः समुद्रस्य तरंगास्तद्वच्चञ्चलतरं वारितरंगचञ्चलतरं तस्मिन् ॥ १०७ ॥

( भा० टी० ) प्रथम तो मनुष्यकी आयुष्यही सौ वर्षकी प्रमाण हुई है उसमेंसे आधी पचास वर्ष सोनेहीमें रात्रिको व्यतीत होती है शेष आधीके तीनभाग करो उसमेंसे प्रथम अंश बालपनकी अज्ञानतामें जाताहै दूसरा वृद्धा ( जरा ) अवस्थामें जाताहै जो बची सो व्याधि वियोग दुःख पराई सेवा कलह हर्ष शोक हानि लाभ इत्यादि नाना क्लेशमें व्यर्थ व्यतीत

होतीहै यदि सौवर्षपर्यन्त जीवन हो तोभी लेखासे सुखके दिन कुछ नहीं निकलते यह तो जलतरङ्गके समान जीवन है इसमें प्राणियोंको कहांसे सुख प्राप्त होगा ॥ १०७ ॥

ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं
यन्मुंचंत्युपभोगकांचनधनान्येकांततो निःस्पृहाः ॥
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्तावयम् १०८॥

(सं० टी०) ब्रह्मेति। ब्रह्मज्ञानविवेकिनः अमला निर्मला धीर्बुद्धिर्येषां ते अहो इत्याश्चर्ये दुष्करं तत्कुर्वंति तत्किं उपभोगान् न भजंति एवं भूतानि धनान्यपि मुंचंति त्यजंति अतः एकांततो निःस्पृहा विरक्ताः वयं तु पुरा न प्राप्तानि संप्रति अधुना न संति अग्रेपि प्राप्तौ दृढप्रत्ययो निश्चयो नास्ति एवंभूतानि धनानि त्यक्तुं न शक्ताः कथंभूतानि धनानि वाञ्छामात्रं परिग्रहो येषां तानि वाञ्छामात्रपरिग्रहाणि न तु प्रत्यक्षाणि॥ १०८॥

( भा० टी० ) ब्रह्मज्ञानके विवेकी निर्मलबुद्धिमान् और सत्पुरुष यह बडा कठिन व्रत धारण करते हैं कि, उपभोग, भूषण, वस्त्र, चंदन, वनिता, शय्या, तांबूल और धन इत्यादि विषयक सामग्री सब त्यागदेते हैं और निरन्तर निःस्पृह रहतेहैं हमको तो ये वस्तु न तो पहिले प्राप्त हुई न अब इच्छामात्रसे ग्रहण होरहेहैं उसेभी हम परित्याग नहीं करसक्ते अर्थात् इनकी आशाकाभी हमसे त्याग नहीं होता ॥ १०८ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ॥
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ १०९ ॥

( सं० टी० ) व्याघ्रीवेति । व्याघ्रीव जरा परितर्जयंती अग्रे तिष्ठति रोगाश्च शत्रव इव देहं प्रहरंति आयुश्च भिन्नघटादिव यथा अंभः उदकं परिस्रवति तथा प्रतिदिनं क्षीयते एवं सति लोकः अहितम् आचरति इति आश्चर्यम् ॥ १०९ ॥

( भा० टी० ) वृद्धावस्था बाघिनीसी सन्मुख खडीहै, सब रोग शत्रुओंके समान देहपर दण्डप्रहार कररहे हैं, आयु प्रतिदिन इस प्रकार निकलती जाती है जैसे कच्चे घडेसे पानी निकलता जाय, तिसपरभी लोक जिसमें अपना बुराहो वही काम करते जाते हैं यह बडा आश्चर्य है॥ १०९॥

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ॥
तदपितत्क्षणभंगि करोति चेदहह कष्टमपंडितता विधेः११०

( सं० टी० ) सृजतीति । अशेषाः समग्रा ये गुणाः शौर्यौदार्यदयादाक्षिण्यादयस्तेषाम् आकरः खनिः सकलगुणोत्पादकमिति यावत् भुवः पृथिव्याः अलंकरणम् अलंकारः सौभाग्यमिति यावत् एतादृशं पुरुषरत्नं ब्रह्मा सृजति उत्पादयति तदा ब्रह्मणोऽतीव चातुर्यं किं च तत् पुरुषरत्नं तत्क्षणभंगि तत्क्षणनाशशीलं करोति चेत्तर्हि अहहेति खेदे कष्टं सा ब्रह्मणोऽतीवापण्डितता मौर्ख्यमित्यर्थः । कुतः स्वारामे स्वयमारोपितान् जलसेचनेन वर्द्धितान् वृक्षान् स्वयं छेत्तुं न समर्थ इति लोकप्रसिद्धिः ॥१००॥

( भा० टी० ) बडे खेदकी बात है कि, ब्रह्माकीभी यह मूर्खता है कि, गुणोंकी खान और संपूर्ण पृथ्वीके भूषण रत्नरूप पुरुषको पैदा करता है और फिर उसको क्षणभंगुर करदेता है उसको तो सदैव स्थिर बनाता तौ उसकी पंडिताई थी ॥ ११० ॥

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ॥
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोप्यमित्रायते ॥१११॥

( सं० टी० ) गात्रमिति । गात्रं शरीरं संकुचितं संकोचं प्राप्तं गतिर्गमनं विगलिता नष्टा दंतावलिः दंतपंक्तिः भ्रष्टा पतितेत्यर्थः । दृष्टिः अवलोकनं नश्यति अंधत्वं प्राप्तं बधिरता कर्णेन्द्रियवैकल्यं वर्धते निकटे उच्चैर्घुष्टमपि न श्रूयते वक्त्रं लालायते लालास्रावं कुरुते बान्धवजनः वाक्यं नाद्रियते न सत्करोति भार्या स्त्री न

शुश्रूषते न सेवां कुरुते हा इति खेदे जीर्णवयसः पुरुषस्य कष्टं दुःखं साक्षात्स्वपुत्रोपि अमित्रायते शत्रुवदाचरतीत्यर्थः ॥ १११ ॥

( भा० टी० ) बडा खेद है कि, वृद्धमनुष्यकी यह दशा होती है कि गात्र सुकड जाता है गति ( चलना ) नष्ट होजाती है दांतोंकी पंक्ति गिर-जाती है और दृष्टि नष्ट होजाती है बहिरा होजाता है मुखसे लाल टपकने लगती है और बंधुजन वाक्यका आदर नहीं करते और स्त्रीभी सेवा नहीं करती और पुत्रभी शत्रुके समान होजाता है इससे ईश्वरकी भक्तिही श्रेष्ठ है ॥ १११ ॥

**क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः**
**क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ॥**
**जराजीर्णैरंगैर्नट इव वलीमंडिततनु-**
**र्नरः संसारांते विशति यमधानीजवनिकाम् ॥ ११२ ॥**

( सं० टी० ) क्षणमिति । क्षणं बालो भूत्वा बालः सन् क्षणमपि युवा तरुणः सन् कामरसिकः कामेषु रसिकः विषयेषु निपुणः क्षणं वित्तैर्द्रव्यैर्हीनः दरिद्रः क्षणमपि च परिपूर्णविभवः पश्चात् जरया जीर्णैः अंगैः वलीमण्डिततनुः वलीभिर्मण्डिता आक्रांता तनुर्यस्य नरः संसारांते मरणसमये यमधानीजवनिकां यमस्य धानीं पुरीं प्रविशति यथा नटः नानावेषान् दधाति तथाऽयं प्राणी नानावस्था दधाति ॥ ११२॥

( भा० टी० ) यह मनुष्य क्षणमें बालरूप और क्षणमें युवा हो रसिक कामरूप क्षणमें दरिद्र क्षणमें धनाढ्य क्षणमें बुढापेसे जीर्ण हो और सिकुडे चमडे ऐसे रूप दिखाकर फिर ( नट ) बहुरूपियोंके समान यमराजके नगरकी ओटमें छिप जाता है ॥ ११२ ॥

**अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा**
**मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ॥**

**तृणे वा स्त्रैणे वा मम समदृशो यांतु दिवसाः**
**क्वचित्पुण्यारण्ये शिवशिवशिवेति प्रलपतः ॥ ११३ ॥**

( सं० टी० ) अहाविति । अहौ सर्पे हारे मुक्ताफलहारे वा बलवति रिपौ शत्रौ सुहृदि हितकरे वा मणौ वा लोष्टे मृत्पिण्डे कुसुमशयने पुष्पशय्यायां दृषदि पाषाणे वा तृणे स्त्रैणे अपत्ये वा इत्यादिषु मम समा दृष्टिर्यस्य समदृशः दिवसाः कदा यांति गच्छंति किंभूतस्य मम क्वचित् कुत्रचित् पुण्यारण्ये स्थित्वा शिवेति नामावलिं प्रलपत उच्चैः आक्रोशेन वदतः ॥ ११३ ॥

( भा० टी० ) सर्प वा हार बलवान् शत्रु वा मित्र मणि और पाषाण पुष्परचित शय्या वा पत्थरकी चट्टान तृण वा स्त्रियोंके समूहमें समदर्शी होकर पवित्र वनमें शिव ३ जपते हमारे दिन कहीं व्यतीत होवे हम यही चाहते हैं ॥ ११३ ॥

इति श्रीभर्तृहरिकृते वैराग्यशतकं-ससंस्कृतटीकं-भाषानुवादसहितम् ।



"श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालय-बंबई.